TRIVANDRUM SANSKRIT SERIES

No. LIII.

श्रीप्रकाशात्मयतीन्द्रप्रणीतः

# शाब्दनिर्णयः

THE

# SÂBDANIRṆAYA

BY

**PRAKÂSÂTMAYATÎNDRA**

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1917.

TRIVANDRUM SANSKRIT SERIES

No. LIII.

# THE SÂBDANIRṆAYA

BY

PRAKÂSÂTMAYATÎNDRA

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS

1917.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५२.

# शाब्दनिर्णयः

श्रीप्रकाशात्मयतीन्द्रप्रणीतः ।

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

न. गणपतिशास्त्रिणा

संशोधितः ।

---

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

---

कोलम्बाब्दाः १०९२, क्रैस्ताब्दाः १९१७.

# PREFACE.

Sâbdanirnaya is a treatise on the Advaita school of the Vedânta philosophy, written in the form of *Kârikas* with *Vrittis*.

The author of the work is called Prakâsâtmayatîndra, a desciple of Ananyânubhava. He is also known to have written another work named Panchapâdikâvivarana from the fact that the first two invocatory verses and another two verses occurring before the last verse of the Sâbdanirnaya are found in the introductory portion of Panchapâdikâ-vivarana. The author flourished earlier than Vidyâranya who wrote Vivaranaprameyasangraha, an abridgement of the Panchapâdikâvivarana.

The edition of the work is based on three palm-leaf manuscripts in Malayalam characters. Two of them designated क and ख belong to Mr. Idapalli Raja; a few folios are missing in the beginning and ending respectively of these manuscripts. The third manuscript marked ग is a complete one belonging to Mr. Narayanan Numburi, Haripad.

Trivandrum,
9th April 1917.

T. GANAPATI SÂSTRÎ.

# निवेदना ।

शब्दनिर्णय इत्ययं कश्चिदद्वैतमतानुयायी वृत्तिसंवलितकारिकारूपो वेदान्तप्रकरणग्रन्थः । शब्दाद् ब्रह्मापरोक्षज्ञानं जायत इत्ययमर्थ इह प्रसाध्यते ।

अस्य प्रणेतानन्यानुभवशिष्यः प्रकाशात्मयतीन्द्रः । शब्दनिर्णयस्य मङ्गलश्लोकयोरुपान्त्यश्लोकयोश्च पञ्चपादिकाविवरणस्यारम्भे दर्शनादयमेव तत्रभवान् पञ्चपादिकाविवरणस्यापि कर्तेत्यवगम्यते । पञ्चपादिकाविवरणप्रतिपाद्यवस्तुसंग्रहात्मकस्य विवरणप्रमेयसङ्ग्रहाख्यस्य ग्रन्थस्य प्रणेता विद्यारण्ययतीन्द्रः पूर्वाश्रममाधवाचार्य इति तस्मात् प्राचीनः प्रकाशात्मयतीन्द्रः ।

अस्य ग्रन्थस्य संशोधनाधारभूतास्तालपत्रमयाः केरलीयालिपयस्त्रय आदर्शाः । तेषु द्वौ इडप्पळ्ळिराजस्वामिकावाद्यन्तयोर्लुप्तकतिपयपत्रौ क. ख.संज्ञौ; अपरो हरिप्पाट्टुनारायणनम्पूरिमहाशयसंबन्धी ग.संज्ञः समग्रः ।

अनन्तशयनम् ।
९-४-१९१७.

त. गणपतिशास्त्री.

॥ श्रीः ॥

प्रकाशात्मयतीन्द्रप्रणीतः

# शाब्दनिर्णयः ।

---

यस्याः प्रसादमवलम्ब्य जगद्गुरूणा-
मप्यस्खलद्बहुगुणाः प्रसरन्ति वाचः ।
सा वेदशास्त्रपरिनिर्मितवन्द्यदेहा
भूयात् समग्रवरदैव सरस्वती वः ॥ १ ॥

विघ्नाभितापम[2]भिहत्य मदीयकृत्य-
बीजं प्रवृद्धमदनुग्रहवर्षपातैः ।
संप्रार्थितः सिततरोऽपि गणेशमेघः
सिञ्चन्नभीष्टफलमङ्कुरयत्वमोघम् ॥ २ ॥

येषां पादरजस्सक्तै[3]र्ध्वान्तपङ्कनिरासिभिः ।
आत्मा मे स्वच्छतां यातस्तान् नमामि गुरूनहम् ॥ ३ ॥

नत्वा ब्रह्म यथा शाब्दान्मानात् तत्त्वमीक्ष्यते ।
तथा वयं निबध्नीमः स्वबुद्धिपरिशुद्धये ॥ ४ ॥

---

१. 'भावम', २. 'प', ३. 'कै' ग. पाठः.

G. P. T. 1205. 500. 21-1-92 B

शाब्दप्रमाणस्वरूपाधिगमाधीना तस्य विषयविशेषे सामर्थ्यावधारणेति शाब्दप्रमाणस्वरूपं निरूपयितुं लोक[1]प्रसिद्धमेव तल्लक्षणमनुवदति —

**शब्दविज्ञानजा यार्थेऽसन्निकृष्टे सुनिश्चिता ।**
**बुद्धिस्तच्छाब्दमानं हि सङ्गिरन्ते विपश्चितः ॥ ५॥**

शब्दविज्ञानादसन्निकृष्टेऽर्थे बुद्धिः शा[2]ब्दंप्रमाणमिति सङ्ग्रहः ॥ ५ ॥

तल्लक्षणोपनिविष्टानां विशेषणानां निवर्तनीयानि मतान्तराणि दर्शयति —

**वक्तुर्विवक्षा मानं वा विषये लिङ्गतोऽपि च ।**
**बुद्धिर्मानान्तरेच्छा च निवार्यन्ते विशेषणैः ॥ ६ ॥**

अत्र केचिदाहुः — वक्तुर्वाक्यार्थविषये विवक्षां प्रमाणान्तरं वा समधिगमयन्ति शब्दाः, नार्थमात्रम् । तयोश्च शब्दसमधिगतयोर[3]र्थेव्यवहारहेतुत्वमिति । तदुक्तं धर्मकीर्तिना — 'वक्तुरभिप्रेतं तु सूचयेयुरि'ति । तान् प्रत्याह — अर्थे बुद्धिरिति । यदपि मतं द्वे एव प्रमाणे प्रत्यक्षमनुमानं च। अतो न शाब्दादेव केवलादर्थसमधिगम[4]ः । किन्त्वर्थेनानुबन्धवतो लिङ्गात् । तदुक्तं —

"प्रत्यक्षमनुमानं च प्रमाणे सदृशात्मना ।
अप्रत्यक्षस्य सम्बन्धादन्यतः प्रतिपत्तितः ॥"

---

१. 'कसि', २. 'ब्दमि', ३. 'र्थे' ग. पाठः. ४. 'तिः' क. पाठः.

इति । शाब्दी च बुद्धिरनुमा, सामान्यद्वारेण बोधकत्वात्, प्रत्यक्षादन्यप्रमाणत्वात्, त्रैलोक्यविषयत्वात्, सम्बन्धज्ञानसापेक्षत्वाच्च, धूमादग्निज्ञानवदित्यर्थः । तन्निराकरणायाह— शब्दविज्ञानादिति । यत्तु— 'आप्तोपदेश आगम' इति लक्षणात् प्रमाणान्तरसापेक्षमर्थमवगमयन्ति शब्दा इति, अत्राह— असन्निकृष्टे इति ॥ ६ ॥

इदानीमाद्ये निराकरणप्रकारमाह—

**प्रवृत्त्या न विवक्षाधीर्मीयतेऽर्थैकनिष्ठया ।**
**प्रयोगहेतुतामेव पश्चादपि समीक्षते ॥ ७ ॥**

तत्र न तावच्छब्देभ्यो विवक्षाधीसमधिगमः, बालो हि प्रवृत्तिलिङ्गेनार्थविपयेण शब्दविज्ञानसमनन्तरभाविना विशिष्टार्थविपयामेव बुद्धिं शब्दकार्यत्वेनानुमिमीते, न वक्तुर्विवक्षादिगोचरां, तत्प्रतिपत्तौ प्रमाणाभावात् । व्युत्पन्नः स्वयं शब्दं प्रयुञ्जानः स्वसाक्षिकं विवक्षादिभावमवगम्य पूर्वस्यापि प्रतिपत्तुस्तत्सद्भावमनुमानेनावगच्छति । तथा पूर्वोऽपि प्रतिपत्ता स्वप्रयोक्तृगतविवक्षादिभावं स्वात्मानुमानेन तदानीमेवावगच्छतीति[1] तस्यां बुद्धौ पश्चाच्छब्दसामर्थ्यं प्रतिपद्य तेनैतत्प्रयोगहेतुतामेव विवक्षादेरयं स्वात्मन्यवगच्छति, न शब्दविषयतां, तत्र सामर्थ्याज्ञानात् । तथैव पूर्वयोरपि वक्तृप्रतिपत्त्रोरित्यवगच्छन् न तत्र शब्दसामर्थ्यं कल्पयति । किञ्च, विवक्षादिर्न[2] केवलः शब्दार्थः । अर्थे व्यव-

१. 'त्यनुमाय त', क. पाठः. २. 'दिकं न के' ग पाठः.

हारात्[1] । किञ्च, अनुपपत्त्या विषयाक्षेपे यं कञ्चिद् विषयमवलम्बेत । अर्थो व्यावृत्तश्चेदर्थ एव तर्हि तद्गोचरोऽव्यभिचारात् । सविकल्पके चार्थमात्रेऽभिलापविशेषानुषङ्गाद् , विवक्षादेरनुमेयतयान्यथासिद्धेः । तद्वाचकपदाभावादपदार्थस्य वाक्यार्थत्वेऽतिप्रसङ्गाच्च । तस्माद् यथासामर्थ्यज्ञानमर्थे[2] एव शब्दगोचर इति ॥ ७ ॥

इदानीमनुमानपक्षं निराचष्टे —

**स्वभावकार्ये न स्यातां देशादिनियमोऽपि न ।**
**नानुमा शक्तिसम्बन्धान्नेक्ष्यते पक्षधर्मता ॥ ८ ॥**

त्रिरूपाणि त्रीण्येव लिङ्गानि स्वभावकार्यानुपलब्धयः । तत्र न तावच्छब्दार्थयोरनुपलब्धिः सम्बन्धः, भावरूपत्वात् । गोत्वस्याप्रतिपत्तावगोत्वे[3]व्यावृत्त्यसिद्धेः कल्पनायोगाच्च नापोहः शब्दार्थः । नापि वृक्षत्वशिंशपात्वयोरिव तयोः स्वभावानुबन्धः, एकार्थसमवायेन तादात्म्याभावात् । न च विवक्षादिनाप्येकार्थसमवायः, एकदेशानुपलब्धेः । नापि धूमाग्न्योरिव कार्यकारणता, प्रमाणाभावात् । नापि विवक्षामात्रप्रभवः शब्दः । गोविवक्षाप्रभवो गोशब्द इति चेद्, विवक्षाविषयस्य गोशब्देनाभिलापः कथं, तस्य तदवगम्यत्वाभावे तद्विवक्षाजन्यत्वात् (इति चेन्न?) । अर्थस्यावस्तुत्वेनाहेतुत्वा[4]भ्युपगमात् । सविकल्पके च तावन्मात्रेऽभिलापसंसर्गात् तत्रैव सम्बन्धज्ञानाच्छब्दस्य विवक्षादिजन्यत्वेऽप्यर्थेऽपि बोधकत्वसम्बन्धो

१. 'त् । अनु' क. पाठः. २. 'र्थो गोचर एवेति ॥', ३. 'त्वस्य व्या', ४. 'त्वस्याभ्यु' ग. पाठः.

विद्यत एव। नाप्यनयोर्देशनियमो यस्मिन् स्निग्धच्छाया तस्मिन् शैत्यमितिवत्। नापि कालनियमो यस्मिन् घटिकाद्वये कृत्तिकोदयस्तस्मिन् रोहिण्यासक्तिरितिवत्। अन्यत्रस्थितदेशकालत्वात्। तस्मादनयोरविनाभावाभावान्नार्थस्य शब्दो लिङ्गम्। कुतस्तर्हि सम्बन्धाच्छब्दादर्थप्रतिपत्तिः। तद्बुद्धिसामर्थ्यलक्षणात्। अर्थेनानुबन्धाभावे कथं तद्बुद्धिसामर्थ्यम्। न वयमर्थेनानुबन्धं ब्रूमः। किन्तु तद्बुद्ध्या। स च तज्जननसामर्थ्यलक्षणोऽनुबन्ध इष्यते। नन्वनुबन्धान्तराभावे कथं तद्बुद्धौ सामर्थ्यम्। कृशानोरिव धूमजनने। नहि तत्र तत्सामर्थ्यादन्योऽनुबन्धोऽस्ति, अथ तत्र वह्निमात्रं कारणं न सामर्थ्यं नामास्ति, तथापि वह्नेर्धूमो जायते चेत्, शब्देभ्योऽप्यर्थबुद्धयोऽपि जायन्ताम्। अथ ज्ञानकार्येऽनुबन्धान्तरापेक्षा न कार्यमात्रे, न। चक्षुष्यर्थबुद्धिसामर्थ्यव्यतिरिक्तस्यानुबन्धस्यादर्शनात्। अथ प्रतिपन्नार्थबुद्धिरनुबन्धान्तरनिमित्ता, न। अदर्शनाच्छब्दार्थयोः। स्यात्तर्हि शक्तिलक्षणादेवानुबन्धादनुमानं, न। सम्बन्धान्तरविशिष्टस्यैव बुद्धिसामर्थ्येऽनुमानत्वप्रसिद्धेः। ननु प्रतिपन्नसम्बन्धाद् बुद्धिरनुमानं, सत्यम्। अर्थेन प्रतिपन्नसम्बन्धात् तद्बुद्धिसामर्थ्यविलक्षणात्। ननु तद्बुद्धिसामर्थ्यसम्बन्धादेव बुद्धिरनुमानम्। नन्वेतावता कथं प्रमाणवैलक्षण्यम्। का वा प्रमाणवैलक्षण्यस्येयत्ता। अपिच धर्मधर्मिपक्षधर्मतादृष्टान्ताश्च शब्दस्यार्थबोधने न निरूप्यन्ते।

---

१. 'र्थ्याल्लक्ष', २. 'र्थ्या' ग. पाठः. ३. 'वानु' क. पाठः.

ततोऽप्यनुमानवैलक्षण्यम् । नन्वत एव बोधसामग्र्यभावा-च्छब्दानामप्रामाण्यं स्यात् । न । धूमादग्निबुद्धाविव शब्देभ्योऽर्थप्रतिपत्तावर्थाविसंवाददर्शनात् । तथाच प्रयोगः—'नानुमानं शब्दः, प्रतिपत्तव्यसम्बन्धान्तरनिरपेक्षत्वे सत्यर्थबुद्धिसमर्थत्वात्, चक्षुर्वत्'। तस्मादज्ञाततया स्वसामर्थ्यादेवावगमहेतुः प्रत्यक्षम् । त्रैरूप्योपेततया गृहीताद् बुद्धिरनुमानम् । तद्बुद्धिसमर्थतया गृहीताच्छब्दात् तत्र बुद्धिरागम इति प्रमाणान्तरत्वम्[1] । तस्माद् युक्तं शब्दविज्ञानादिति ॥ ८ ॥

इदानीं मानान्तरसापेक्षत्वपक्षे निराकरणप्रकारमाह—

**शब्दो मानान्तरापेक्षो वेदे लोके च नेष्यते ।**
**वक्तृमानं च शब्दस्य प्राप्तदोषापनोदि हि ॥ ९ ॥**

वेदे तु मानान्तरानपेक्षत्वमपौरुषेयत्वप्रतिपादनेन वक्ष्यामः । पौरुषेये तु वक्तृज्ञानं कोपयुज्यतामिति विवेक्तव्यम् । यदि वाक्यार्थज्ञाने तत्प्रमितौ वेति मतं, तत्र न तावद् वक्तृज्ञानमनवगतमेव तदुभयं जनयति । प्रतिपत्तुर्बुद्धिद्वारेणापि तत्सम्बन्धाभावात्, कर्तृकरणयोश्च क्रियोत्पत्तौ संबन्धापेक्षत्वात् । अवगतं चेत्, कथमनवगतेऽप्रमिते चार्थे तद्व्यावृत्तं वक्तृज्ञानं गम्येत । नच निर्विषयमवगम्यमानं क्वचित् प्रमितिहेतुः । ननु पदेभ्योऽवबुध्यन्ते पदार्थाः । सत्यम् । न तावन्मात्रे[2] वक्तृज्ञानमपेक्ष्यते । तर्हि सामान्यतो दर्शनेनोत्प्रेक्षया वा संस-

१. 'णभेदः । त', २. 'तन्मा' क. पाठः.

र्गोऽपि प्रतीयताम् । प्रतीत एवास्मिन्निदानीं पदानां पदावबुद्धानां वा पदार्थानां पदातिरिक्तस्य वा वाक्यस्य संसर्गावगमसामर्थ्यसंकथा । यतः सत्स्वपि पदादिष्वसति च विशिष्टवक्तृज्ञानावगमे संसर्गनिश्चयाभावात्, सति च तस्मिन् पदाभावे[1] संसर्गनिश्चयाभावादर्शनात्, तत एव तन्निश्चये सिद्धे कारणकारणतयान्यथासिद्धत्वात् पदादीनां न संसर्गसहकारिकारणतापि सिध्येत् । तत्र कथं लोकसिद्धशक्तिसव्यपेक्षे वक्तृज्ञानविकले वेदे । विशिष्टस्तु वाक्यार्थ इति पदेभ्य एव संसर्गसिद्धिः । ननु शक्तिग्रहणकाले संसर्गे शक्तिरवगता । सत्यम् । प्रतिपत्तिकाले नासावुपयुज्यते, वक्तृज्ञानादेव संसर्गनिश्चयात् । अथवा तत्रापि प्रतिपत्तिकाले[2] दृष्टेनैव न्यायेन संसर्गशक्तिग्रहोऽपि भ्रमः कल्प्येत । तस्मात् सामर्थ्यग्रहणानुसारेण शब्देभ्य एव संसर्गनिश्चयो वक्तव्यः । तत्र मानान्तरविरोधाद् यथाप्रयोगमनन्वितेपु पदार्थेपु तदभिधायिनां शब्दानामितरेतरान्वययोग्यविभक्तिसंबन्धितया संहत्यबुद्धौ सन्निधानं शब्दानां दोषः । ततो भ्रान्तिज्ञानम् । स च शब्दगतो दोषः प्रयोक्तृगतेनार्थविपर्येण भ्रान्तिज्ञानेनोत्प्रेक्षाज्ञानेन वा जायते प्रयोगद्वारेणेत्यन्वयव्यतिरेकाभ्यामवगम्यते । तत्र वक्तृप्रमाणं तथाविधदोषनिराकरणमुखेनोपयुज्यते, न प्रमितिहेतुतया । पुरुषसंबन्धे सत्याशङ्कितदोषत्वान्नियमेन तदपेक्ष्यते । वेदे[3] पुनरितरेतरान्वययोग्यविभक्तियुक्तपदसन्निधानबुद्धेस्तदर्थप्रवृ-

---

१. 'दाद्यभा' ग. पाठः. २. 'ल' क पाठः. ३. 'दे तु पु' ग. पाठः.

त्तज्ज्ञानान्तरनिमित्तप्रयोगजन्यत्वाभावान्न दोषशङ्का। नापि तन्निरासापेक्षेति नैरपेक्ष्यमित्युच्यते। अन्यथा न वेदे प्रमितिलाभ इत्युक्तम्। तदेवं लोकेऽपि न प्रमितावपेक्षा। ननु स्वविषयज्ञानान्तरजन्या स्मृतिः सापेक्षा, तथेहापि स्यात्। तन्न। मानान्तरसम्भिन्नार्थत्वात् तत्र सापेक्षता। अन्यथानुमाने व्यापकोऽग्निरिति व्याप्तिज्ञानजन्येऽपि तथा स्यात्। न तथेह संभेदः, शब्दस्यार्थमात्रे सामर्थ्यादिति। तस्माद् युक्तमसन्निकृष्टग्रहणम्। अतः समीचीनमेव शाब्दलक्षणमिति स्थितम्॥ ९॥

किं पुनः शब्दशब्देनाभिधीयते, यदाकारविज्ञानादर्थबुद्धिः शाब्दी। जातिरित्याह —

**शब्दशब्दोऽपि तज्जातावखण्डत्वाददृष्टतः।**
**उपाधेः प्राग्विकल्पाच्च प्रत्यभिज्ञा च लोकवत्॥ १०॥**

एकैस्याभिधानस्य विभिन्नार्थता[2] प्रतीता शक्तिभेदं सामान्यं वावलम्बते। शक्तिभेदे त्वभिधेयानन्त्यात् सम्बन्धज्ञानाशक्तिः[3] कल्पनागौरवं च स्यात्। स्यादेतत्। यथा वाचकशब्दस्तदुभयं नापेक्षते, तद्वदिहापि स्यादिति। नैतद् युक्तम्। तत्र यौगिकत्वाच्छब्दस्यावयवार्थसामान्ययोगेन विभिद्यमानेष्वर्थेषु तदुभयमन्तरेणापि[4] प्रवृत्तिसम्भवात्। अयं पुनरखण्डः शब्दो नावयवशक्त्या शब्दविशेषानाहेति[5]सामान्यमेवावलम्बनीयम्। नन्विदं तत्कारणमित्यादयः शब्दास्तटस्थमेवोपाधिमवलम्ब्य

१. 'त' ग. पाठः. २. 'र्थवृत्तिता श' क. पाठः. ३. 'न.' ग. पाठः. ४. 'नुवृ' क. पाठः. ५. 'षमाहे' ग पाठः.

विशेषाभिधायिनः, तथेहापि श्रोत्रग्राह्यत्वं तटस्थमेवावलम्ब्य विशेषानेव शब्दशब्दोऽप्यभिधत्ताम् । तन्न । अनवगतोपा-धा[1]वौपाधिकाभिधानपरामर्शानुपपत्तेः । न हीदानीमुपलभ्यमाने॒ऽपूर्वे शब्दविशेषे तत्परामर्शः, श्रोत्रतज्ज्ञानतद्ग्राह्यत्वा[2]-नामनध्यक्षत्वात् । प्रथमप्रत्यये च तत्राभिधानमनुरज्यते । ननु विषयसंवे[3]दनानुमितेन श्रोत्रग्राह्यत्वेनोपलक्षिते तस्मिन्नभिधानपरामर्शः स्यात् । न । श्रोत्रग्राह्यतया पूर्वप्रतिपन्नसमानाकारविषयतदभिधानविकल्पानुपपत्त्यावगममन्तरेण तद्ग्राह्यता[4]-नुमानायोगात् । न हि संवेद्यमात्रसंवेदनं तद्ग्राह्यतावगमहेतुः । न हि तदानीमेवान्वयव्यतिरेकाभ्यां तद्ग्राह्यतावगन्तुं शक्यते, इन्द्रियान्तराणामपि सन्निधानात् । न चेन्द्रियान्तरग्राह्यवैलक्षण्येन तद्ग्राह्यतानुमानं, तद्ग्राह्यान्तरादपि वैलक्षण्यस्य भावात् । सालक्षण्ये च सामान्यसिद्धेः[5] । न चोपाधेरप्येकत्वम[6]स्ति, श्रोत्रादीनां भिन्नत्वात् । नित्यानुमेयेषु सामान्यायोगात् । अतोऽपूर्वशब्दोपलम्भेऽप्यभिधानानुपङ्गाय शक्तिभेदपरिहाराय श्रोत्रग्राह्यतावगमाय च[7] श्रोत्रप्रथमप्रत्ययावगम्यं सामान्यमेवोपगन्तव्यम् । ननु सामान्यं प्रत्यभिज्ञानाधीनात्मलाभं तदभावे नावकाशमर्हति । न तावत् सोऽयमित्यवमर्शप्रत्यभिज्ञा प्रसिद्धसामान्येऽप्यस्ति । यदि बुद्धावाकारमात्रानुसन्धानमस्त्येव, तर्हि शब्दं दृष्टवतः शब्दान्तरेऽर्थाद्

---

१. 'धावभि', २. 'त्वादीना', ३. 'दनेना' क. पाठः. ४. 'ताया अनु', ५. 'द्धिः । न' क. पाठः. ६. 'मप्यस्ति' क. पाठः. ७. 'च प्र' ग. पाठः.

विलक्षणाकारप्रतिपत्तिः, येन प्रथममभिधानानुषङ्गः स्यादित्युक्तम् । न च द्रव्यरसादिसमानं शब्दान्तरं प्रतीयते । किञ्च श्रोत्राद्युपाधौ चैकत्वकल्पनाद्वाराभिधेयैकत्वकल्पनं, मा भूत्त्वोदात्तानुदात्तपटुमृदुत्वादीनां[1] श्रोत्रग्राह्यतया शब्दशब्दार्थता, उदात्तः शब्द इत्यादिना शब्देन धर्मिणासामानाधिकरण्यात् । तस्माज्जातिकल्पनैव श्रेयसी । अतस्तज्जात्युपरक्तज्ञानादर्थे[2]बुद्धिः शाब्दीति स्थितम् ॥ १० ॥

इदानीमर्थप्रतिपत्तिनिमित्तं शब्दं विमृशति —

**वर्णातिरिक्तशब्दाद् वा वर्णविज्ञानसंस्कृतेः ।**
**स्मारकैर्वातिरिक्तैर्वा वर्णेभ्यो वार्थधीर्भवेत् ॥ ११ ॥**

वर्णेभ्योऽतिरिक्तादेकशब्दप्रत्ययालम्बनात् पदसंज्ञकात् पदार्थप्रत्यय इत्येके सङ्गिरन्ते । वर्णविज्ञानसंस्कारैर्वर्णस्मृतिहेतुभिरित्यन्ये[3] । तैरेव स्मारकसंस्कारातिरिक्तैरर्थप्रत्यय इत्यपरे । वर्णेभ्य एवेति केचित् ॥ ११ ॥

तत्रान्त्यं पक्षमात्मीयत्वेन स्वीकरोति —

**वर्णाः स्वज्ञानसंस्कारैः संभूयस्मृतिकारिभिः ।**
**क्रमेणैकस्मृतौ बुद्धा बोधयन्त्यर्थमञ्जसा ॥ १२ ॥**

तदेतत्पूर्वपक्षनिराकरणमुखेन प्रतिपादयितुं वर्णव्यतिरिक्तशब्दवादं वर्णयति —

**वर्णान्नै[4]कस्य बुद्धिरुपलब्धात् सतोऽपि वा ।**
**अदृष्टेरुपलब्धाद् वा स्मृताद् वा संहतान्न धीः ॥ १३ ॥**

१. 'दीनां श' क. पाठः. २. 'र्थे', ३. 'त्येके सङ्गिरन्ते । तै', ४. 'दे' ग. पाठः.

अयोगात् समुदायस्य कारणानां च भेदतः।
अतो वर्णातिरिक्तात् सा शब्दादेवेति गम्यते ॥ १४ ॥

अस्ति तावद् गकारादिवर्णोपलब्ध्यनन्तरमर्थबुद्धिः। सा किं वर्णेभ्य एव, तद्व्यतिरिक्ताच्छब्दाद् वेति विवेचनीयम्। न तावदेकैकस्माद् वर्णादुपलब्धादनुपलब्धाद् वा सा, अदृष्टेः। नापि वर्णसमुदायात, तदभावात्। अत एव न वर्णसमुदायोपलब्धेः स्मृतेर्वार्थप्रत्ययः, उपलब्धिकारणानां च वर्णोच्चारणानां क्रमवर्तितया भेदात्, संस्काराणां च स्मृतिहेतूनां प्रतिवर्णं निरपेक्षस्मृतिहेतुतया भिन्नत्वाद् न युगपत् समस्तवर्णोपलब्धिः स्मृतिर्वा सम्भवति। अतोऽर्थबुद्धिकार्यपरिशेषानुमानकल्पिताद् वर्णभेदेऽप्येकोऽयं शब्द इति प्रत्यक्षावसेयादन्यतः शब्दादर्थावगम इति ॥ १३, १४ ॥

इदानीमिमं पक्षं निराकरोति —

वर्णातिरेकि नाध्यक्षं वर्णाः सोपाधिकाः पदम्।
अर्थे बुद्धे पदं नैकं योगः शब्दान्तरेऽपि न ॥ १५ ॥

न तावद् वर्णव्यतिरिक्तं पदं वर्णसमवेतं घटादिवत् स्वतन्त्रं वा प्रत्यक्षेणावगम्यते। नन्वेकमिदं पदमिति भिन्नवर्णातिरिक्तं पदमध्यक्ष्यते। न तावच्छ्रोत्रेन्द्रियेण, युगपद् गकारादिवर्णत्रयोपलम्भायोगात्। न च वर्णोपलम्भविकलः शब्दप्रत्ययः। न च गकारमात्रे पदमभिव्यज्यते, गङ्गादिपदानामपि तुल्यत्वात्। सत्यं तत्रैवाभिव्यज्यते। किन्तूत्तरवर्णाभ्यां विशेषेण परिच्छिद्यते। एवमपि वर्णत्रयावमर्शमन्तरेण न विशि-

ष्टार्थावबोधकं पदमभिव्यज्यते । स चावमर्शो न श्रोत्रेन्द्रियनिबन्धनः, असम्भवात् । न च गकारमात्र एव[1] गोत्वमिव खण्डादौ[2] वर्णातिरिक्तं किञ्चित् पदमभिव्यज्यते । नापि मानसप्रत्यक्षं पदं, सकृद्वर्णत्रयानवमर्शात् । एकैकवर्णप्रत्ययजनितसंस्कारैरन्त्यवर्णप्रत्ययजनितपरिपाके च मनस्यध्यक्ष्यत इति चेद्, न । वर्णत्रयानुपरागेणानवभासनात्[3] । तेषां युगपदुपरागानुपपत्तेश्च । अथ वर्णोपलब्धिजनितसंस्काराः सम्भूयाशेषवर्णविषयकं स्मृतिज्ञानमेकं सम्पादयेयुः । न तर्हि स्मर्यमाणवर्णालम्बि पदविज्ञानं प्रत्यक्षं, स्मर्यमाणघटगतशौक्ल्यवत् । किञ्च तादृशादेव स्मृतिविज्ञानादर्थबुद्धिसिद्धेः पदकल्पनार्थवती । नन्ववभासते पदम् । सत्यं, वर्णा एवैकार्थबोधनसामर्थ्योपाधौ[4] वनवत् पदबुद्धिभाजः । ननु शक्त्यवधारणायाः प्रागपि पदमवगम्यते । न । अनभ्यस्तभाषायामुदाह्रियमाणायामव्युत्पन्नस्य पदविभागज्ञानाभावाद्, एकानेकत्वाभ्यां पदसन्देहात् । संहितास्वप्यध्येतॄणां[5] पदव्यवहारस्तथाविधबुद्धिमद्व्यवहारनिबन्धनः । अतः पदबुद्धिरौपाधिकी वर्णविषयैव । ननु वर्णेभ्यो नार्थप्रत्यय इत्युक्तं, सत्यम् । अबोधकपदाभिव्यक्तावप्युक्तानुपपत्तिस्तुल्या । अथैकैव[6] वर्णत्रयावलम्बिनी स्मृतिः पदमभिव्यनक्ति, सा तर्ह्यर्थाभिव्यक्तावपि समाना । वक्तव्या च सा पदाभिव्यञ्ज-

---

१. 'मे' क पाठः. २. 'ण्डत्वादौ' ख. पाठः. ३. 'णाव' ग. पाठः ४. 'र्थप्रतिपादन' क. पाठः. ५. 'ना' ख. पाठः. ६. 'त' ग. पाठः.

कवर्णसङ्ख्यानियमव्यवहाराय । न हि सङ्ख्येयावमर्शमन्तरेण सङ्ख्योपलभ्यते । तस्माद् वर्णव्यतिरिक्तपदकल्पनाकारणाभावाद् वर्णेभ्य एवार्थप्रतिपत्तिरिति रमणीयम् ॥ १५ ॥

द्वितीयं पूर्वपक्षं वर्णयति —

**स्मारका एव संस्काराः स्मृतिभिः सम्प्रबोधिताः ।**
**अर्थधीलब्धसामर्थ्या बोधयन्त्यर्थमञ्जसा ॥ १६ ॥**

वर्णोपलम्भजनितसंस्कारा वर्णस्मृतिहेतव एवार्थं प्रत्याययन्ति । नन्वनुपलब्धानां चक्षुरादिवत् कथं प्रत्यायकत्वम् । नैष दोषः । स्वस्वकार्यवर्णविषयस्मरणसमुन्नीतानां तदुपपत्तेः। नन्वदृष्टा संस्कारेभ्योऽपूर्वार्थाधिगतिः । सत्यम् । इहान्त्यवर्णप्रत्ययसहकारिभ्यस्तेभ्य एव प्रत्यभिज्ञेव पूर्वोपलम्भसंस्कारादर्थाधिगतिरित्यनन्तरकार्यदर्शनादेवावगम्यते ॥ १६ ॥

उच्यते —

**स्मारकादर्थधीर्न स्यादन्यत्रानुपलब्धितः ।**
**साम्यात् प्रसिद्धेर्वर्णेभ्यः क्रमसिद्धेभ्य एव सा ॥१७॥**

न तावदन्यज्ञानसंस्कारोऽन्यमर्थमवगमयति, अदर्शनात् । कार्यसामर्थ्यात् कल्प्यत इति चेत्, तर्हि तत एव क्रमोपलब्धानामेव वर्णानां सामर्थ्यं कल्प्यताम् । नन्वन्त्यवर्णप्रत्ययात् तत्पूर्वक्षणवर्तिनां पूर्ववर्णोपलम्भानां कथं कालव्यवधानेन कार्यसामर्थ्यमदृष्टपूर्वं कल्प्यते । समानमेतद् युगपद्भाविसंस्कारेष्वदृष्टसामर्थ्यकल्पनम् । कोऽयं निर्णयहेतुः । अनुपपत्तिसाम्याच्छब्दादर्थप्रतिपत्तिप्रसिद्धेश्च वर्णोपलम्भपक्ष एव श्रेयान् । प्रत्यभिज्ञायामपि स्मृत्यंश एव संस्काराज्जायते,

नापूर्वाधिगमः । न चान्त्यवर्णप्रत्ययोऽपि सहकारी । यदि तावत् पदेभ्य एव संसर्गबुद्धिराश्रीयते, तदा वाक्यान्त्यवर्णप्रत्ययसमये पदान्त्यवर्णप्रत्ययानामनवस्थानात् । (न) च वाक्यान्त्यवर्णप्रत्यय एव कृत्स्नपदसहकारी, तस्यानवस्थितवर्णविशेषस्य पदेष्वन्तर्भावे पदानवधारणप्रसङ्गात्, प्रतिप्रयोगं पदस्वरूपभेदात् । अनन्तर्भावे संस्कारमात्रस्य पदस्य स्वाभिधेयपदार्थांशबोधने सामर्थ्याभावः स्थित एव । पदेभ्यः पदार्थास्तेभ्यः संसर्ग इत्येतन्निराकरिष्यते ॥ १७ ॥

अपिच —

**व्युत्क्रमे वक्तृभेदे च स्यात् संस्काराविशेषतः ।**
**कृत्स्नसंस्कारधीहानात् सम्बन्धादिग्रहश्च न ॥ १८ ॥**

व्युत्क्रमप्रयुक्तेष्वपि वर्णेषु संस्काराविशेषादर्थबुद्धिः स्यात् । वर्णपक्षेऽपि तथा किं न स्यात, क्रमविशेषनियमात् । तर्हि संस्कारेऽपि स नियमः स्यात् । न तावदुत्पत्ति[1]क्रमनियमस्तेषामर्थबोधने विनियुज्यते । अन्त्यवर्णसंस्कारजन्मानन्तरमुत्पत्तीनामतिवृत्ततया तत्क्रमस्याप्यतिवृत्तेः । न च देशकालक्रमः, युगपदेकत्रावस्थानात् । ननु न वर्णानामपि देशकालक्रमः, व्यापित्वान्नित्यत्वाच्च । उपलब्धिक्रमस्त्वन्त्यवर्णोपलब्ध्यनन्तरमतिवृत्तः । सत्यम् । अशेषवर्णावमर्शिस्मृतिविज्ञानोपरक्ततयाऽतिवृत्तस्यापि क्रमस्य हेतुत्वाभ्युपगमाद्, उपलब्धिक्रमपक्षस्यानङ्गीकरणात् । वक्तव्या च तथाविधस्मृतिः ।

---

१. 'त्तिनि' ग. पाठः.

अन्यथा एतावद्भिरेवंक्रमकैश्च वर्णैरेकपदबुद्धिगोचरैरुत्पन्नाः संस्कारा एकमर्थमधिगमयन्तीति क्रमसङ्ख्याविशिष्टवर्णपदव्यवहाराद्ययोगैः[1] । तदुक्तमौत्पत्तिकसूत्रे* वार्त्तिककारैः—

"अन्त्यवर्णे च विज्ञाते सर्वसंस्कारकारितम् ।
स्मरणं पूर्ववर्णेषु सर्वेष्वन्ये प्रचक्षते ॥"

इति सिद्धान्तत्वेन । अतो व्युत्क्रमप्रयुक्तेषु स्यादेवार्थबुद्धिः । भिन्नवक्तृकेष्वपि क्रमविशिष्टतयाऽनुसन्धीयमानेषूत्पद्यमानार्थबुद्धिः संस्कारपक्षे तदनपेक्षा स्यात् । स्यात् तर्हि क्रमोपहितसंस्कारबुद्धिरर्थाधिगमहेतुः[2] । न । तदुपलम्भकारणाभावात् । वर्णस्मृतिकार्याण्येवोपलम्भकारणमिति चेद् , न । तेषामपि क्रमवर्तित्वात् , क्रमोपहितसकलवर्णविषयकैकज्ञानायोगात् । किञ्च अस्मिन् पक्षे सम्बन्धिज्ञानात् सम्बन्धज्ञानं, ज्ञाताच्छब्दादर्थबुद्धिः, सविकल्पके चाभिधानानुस्मृतिः, इत्यादिव्यवहारो दुस्संपादः[3] । अथ क्रमसंसृष्टाशेषवर्णाविमर्शिस्मृतिज्ञानोपगमादेवैतत् सर्वं सम्पत्स्यत इति, तर्हि तत एवार्थसिद्धेः संस्कारेषु सामर्थ्यकल्पना दुर्लभैव । तस्मात् संस्काराणामपूर्वसामर्थ्यायोगात्, प्रसिद्धिविरोधाद्, व्युत्क्रमादिषु प्रसङ्गात्, सम्बन्धज्ञानाद्ययोगाच्च न संस्कारपक्षः श्रेयान् । किन्तु वर्णस्मृतिपक्ष एवेति स्थितम् ॥ १८ ॥

१. 'गात् ।' क. पाठः. २. 'व', ३. 'वा' क. पाठः.

* जैमिनिसूत्रम् (१. १. ५)

ये तु स्मारकसंस्कारव्यतिरिक्तानर्थावबोधकानपूर्वसंस्कारानेव कल्पयन्ति, तान् प्रत्याह—

**अयुक्तालौकिकी क्लृप्तिः संस्कारे क्लृप्तिगौरवात्।**
**पदादेवार्थसंबुद्धेस्तत्र क्लृप्तिर्लघीयसी ॥ १९ ॥**

अवश्यं हि त्वयापि वर्णातिरिक्तं पदं निराकुर्वता अशेषवर्णावमर्शि विज्ञानं पदव्यवहारायोपगन्तव्यम्। तदानीं तत एवार्थसिद्धेर्नालौकिकसंस्कारकल्पनावकाशः। कल्पनागौरवाच्च वर्णज्ञानानामपूर्वसंस्कारसामर्थ्यं संस्कारस्वरूपाणि तेषामर्थबुद्धिसामर्थ्यं चेति। नायं दोषो वर्णस्मृतिपक्षे। ननु न संस्कारा नियमेन स्मृतिमुत्पादयन्ति, यतो नियमेनान्त्यवर्णानन्तरमर्थबुद्धिः स्यात्। अपूर्वसंस्कारपक्षेऽपि समानोऽयं दोषः। कार्यदर्शनाद् नियमेनोत्पादकत्वकल्पना वर्णस्मृतिपक्षेऽपि तुल्या। तस्मात् स्मर्यमाणवर्णेभ्य एव पदार्थप्रतिपत्तिरिति स्थितम्। तथाच *देवताधिकरणे भाष्यं— "वृद्धव्यवहारे चेमे वर्णाः क्रमानुगृहीता गृहीतार्थविशेषसम्बन्धाश्च सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्ति" इति ॥ १९ ॥

इदानीं वाक्यार्थप्रतिपत्तिनिमित्तं शब्दं विमृशति—

**गृहीतपदसम्बन्धाद् वाक्याद् वा पदभागिनः।**
**पदार्थेभ्यः पदेभ्यो वा संसर्गं प्रतिजानते ॥ २० ॥**

---

* ब्र० अध्या० १. पा० ३. सू० २८.

गृहीतपदपदार्थसम्बन्धात् पदव्यतिरिक्तादेव वाक्याद-विभक्तपदात्मकाद् विशिष्टसंसर्गप्रतिपत्तिरिति केचित् प्रतिजानते। पदावबुद्धेभ्यः पदार्थेभ्य इत्यपरे। पदेभ्य एव संसृष्टाभिधानसमर्थेभ्यः संसर्गप्रत्यय इत्यन्ये प्रतिपादयन्ति ॥ २० ॥

तत्रान्त्यं पक्षमात्मीयत्वेन स्वीकरोति—

**पदैरेवान्वितस्वार्थप्रतिपादनशक्तिभिः ।**
**गुणप्रधानभावात्मा संसर्गः प्रतिपाद्यते ॥ २१ ॥**

पक्षान्तरनिराकरणमुखेनैतत् प्रतिपादयितुं प्रथमं वाक्यपक्षं निराचष्टे[1]—

**तन्मानाभावतोऽज्ञानादानन्त्यात् सङ्गतेस्तथा ।**
**शक्त्यानन्त्यात् प्रयोगाणां भेदाद् वाक्यं न बोधकम् ॥**

न तावत् पदव्यतिरिक्तं वाक्यं पदसमवेतं घटादिवत् स्वतन्त्रं वा श्रोत्रेण मनसा वा प्रत्यक्षेणोपलब्धुं शक्यम्, एकवाक्यताबुद्धेः पदवद् विशिष्टैकार्थसामर्थ्योपाधिनिबन्धनत्वात्। अनभ्यस्तभाषायां तथानवगमात्। अपिच अभ्युपगमेऽपि प्रतिप्रयोगं पदावापोद्धाराभ्यां भिद्यमानस्य वाक्यस्य पदशक्तिभ्यो व्यतिरिक्तशक्तिमतश्च शक्येन सम्बन्धग्रहणमशक्यसम्पादनम्। नैवं पदपदार्थसम्बन्धज्ञानादिति चेत्। कथमन्यस्य सम्बन्धज्ञानादन्यमर्थमवगमयेत्। अथ नात्यन्तमन्यानि पदानि वाक्यात्, किन्तु तदेव परोपाधिविभागेन

1. 'ष्ट' ग. पाठः.

पदानीति कथ्यंते । नैतत् सारम् । गौरित्यखण्डस्यापि पदस्य शक्तिभेदे पृथक् सम्बन्धज्ञानमपेक्ष्यते, किमु शक्तिभङ्गेदेऽपि । अथ तत्राभिधेयभेदात् तदपेक्षा, इह तु पदार्थौ एव संसृष्टौ वाक्यार्थे इति न पृथग् वाक्यस्य शक्तिग्रहणापेक्षा । न । प्रतिपाद्यभेदात्, संसर्गशब्दस्यैव पृथक् शक्तिज्ञानापेक्षेति न शक्तिग्रहणमुपपद्यते । न चागृहीतसम्बन्धं वाक्य बोधयति, पदवच्छब्दत्वात् । तथा पदतच्छक्तिव्यतिरिक्तवाक्यतच्छक्तिकल्पनायां प्रतिप्रयोगं भेदात् कल्पनागौरवं च स्यात् । तथाच शिशो! गामानय, गां बधान । अर्भक! गामानय, गां बधान । बाल! गामानय, गां बधान, डिम्भ! गामानय, गां बधान । इत्यष्टानां प्रयोगाणामष्टौ वाक्यानि तच्छक्तयश्च कल्पयितव्याः । पदवादिनस्तु सप्तैव । तथा शुक्लामिति पदान्तरप्रयोगे वाक्यभेदात् पुनरष्टौ वाक्यानि तच्छक्तयश्चकल्पयितव्याः । पदवादिनस्त्वेकैव शक्तिः । तस्माद् वाक्यपक्षो मुधा ॥ २२ ॥

इदानीं पदार्थपक्षं प्रतिजानीते —

**पदार्थान् प्रतिपाद्यैव निवर्तन्ते पदान्यतः ।**
**पदार्था एव संसर्गं बोधयन्त्यूर्ध्वमञ्जसा ॥ २३ ॥**

पदेभ्यः प्रतिपन्नानां पदार्थानां स्वात्मसंसर्गप्रतिपादनमभिहितान्वयो नाम पूर्ववादिना प्रतिज्ञातः ॥ २३ ॥

१. 'ध्येत । नै' ख. पाठः. २. 'र्थ', ३. 'ष्टो' क. पाठः. ४. 'र्थो' ख. पाठः. ५. 'नः स' क. पाठः. ६. 'था च शु', ७. 'तम् ॥' ख. पाठः.

तत्र प्रमाणमाह—

**आवापोद्धारलब्धार्थप्रयोजकसमाश्रयात् ।**
**व्यवधानात् पदेभ्योऽर्थक्रमवत्प्रत्ययैरपि ॥ २४ ॥**

**संसर्गसिद्धेरर्थेभ्योऽप्यन्यथासिद्धितस्तयोः ।**
**स्वरूपमात्रे सामर्थ्यं पदानामवसीयते ॥ २५ ॥**

गामानय गां बधान, अश्वमानय अश्वं बधान इत्यादिप्रयोगभेदेषु गोशब्दावापे गोरूपमात्रावापात्, तदुद्धारे चोद्धारात् तावन्मात्रस्यैव गोशब्दाभिधेयता, नार्थान्तरतत्संसर्गयोः, व्यभिचारात् । तथा प्रतिपत्तिकालेऽपि गवादिशब्देभ्यः क्रमेणार्थमात्रप्रत्यया एव जायन्ते, नार्थान्तरतत्संसर्गप्रत्ययाः । संसर्गप्रत्ययस्त्वन्त्यपदार्थप्रत्ययात् पराचीनः । तदेवं प्रयोगप्रत्ययाभ्यामर्थस्वरूपमात्रे पदसामर्थ्येऽवगते वाक्यप्रयोगसमनन्तरभाविनः संसर्गप्रत्ययस्यानन्यथासिद्धान्वयव्यतिरेकाभ्यां पदार्था एव हेतवः कल्प्यन्ते । ननु प्रवृत्तिलिङ्गेन संसर्गप्रत्यय एवान्वयव्यतिरेकाभ्यां शब्दकार्यत्वेन गम्यते । तन्न, कारणकारणविषयतया तयोरन्यथासिद्धेः । तस्मात् स्वरूपमात्रे पदानां शक्तिर्न संसर्ग इति स्थितम् ॥ २४, २५ ॥

एतन्निराकर्तुमन्विताभिधानपक्षं प्रतिजानीते—

**पदानामेव यन्नाम संसृष्टस्वार्थबोधनम् ।**
**अन्वितस्याभिधानं तत् सङ्गिरन्ते विपश्चितः ॥ २६ ॥**

तत्र प्रमाणमाह —

**प्रतिपत्तुः प्रवृत्त्या हि शब्दविज्ञानबन्धना[1] ।**
**संसर्गबुद्धिर्व्युत्पन्नाव्यवधानानुमीयते ॥ २७ ॥**

प्रवृत्त्यनुमिते हि संसर्गज्ञाने शब्दसामर्थ्यमन्वयव्यतिरेकौ गमयतः । ननु पदार्थबुद्धिव्यवधानेना यथासिद्धिरुक्ता, न तदानीं तावद्व्यवधानप्रतिपत्तिः। न । कालान्तरे तदनुसारेणैवावापोद्धारसम्भवात् । न च लोकेऽपि विशेष(ण)प्रतिपत्तिजन्या विशिष्टप्रतिपत्तिरिति नियमः । प्रतिपादकचक्षुरादिसाम्ये सति प्रथमत एव विशिष्टप्रतिपत्तेः । तस्मात प्रथमत एवान्वयव्यतिरेकौ संसर्गसामर्थ्यं गमयत इति स्थितम् ॥ २७ ॥

नन्वेवमप्यावापोद्धाराभ्यां स्वरूपमात्रे सामर्थ्यमित्युक्तमिति । तत्राह —

**योग्येतरान्वितस्यार्थस्यावापोद्धारदर्शनात् ।**
**संसृष्टेष्वेव सामर्थ्यं पदानामवसीयते[2] ॥ २८ ॥**

यद्यपि प्रति(प्र)योगं विशेषान्तरतत्संसर्गयोर्व्यभिचारो दृश्यते, तथापि योग्येतरान्वितस्यार्थस्याव्यभिचारात् प्रथमावगतसंसर्गसामर्थ्यानुसारेण तत्रैव सामर्थ्यं कल्प्यत इत्यभिप्रायः। न च पदार्थज्ञानस्यावापोद्धाराभ्यां संसर्गस्यावापोद्धाराविति युक्तं, तस्य संसर्गात् पूर्वभावितया संसर्गेण तदानीमन्वयव्य-

---

१. 'नात्', २. 'गम्यते' क. पाठः.

तिरेकायोगात्, शब्दस्यैव[1] तदानीं पूर्वभावित्वासिद्धेः। नन्वर्थान्तरमात्रान्वितं गोत्वं न गोशब्दसामर्थ्यविषयः, आनयनान्वयस्याशाब्दत्वप्रसङ्गात्। अर्थान्तरमात्रान्वयस्य[2] च स्वरूपमात्राभिधानेऽप्यनुमानादिनैवान्यथासिद्धेर्न तत्र शब्दसामर्थ्यकल्पना युज्यते॥ २८॥

अथानयने[3]विशेषान्वितमेव गोत्वं गोपदाभिधेयं कल्प्येत, तदानयतिपदान्तरवैयर्थ्यप्रसङ्गः। तत्राह—

न सामान्यान्वयं ब्रूमो विशेषान्वयमेव तु।
अर्थेऽपि चोदना तुल्यापेक्षा च सहकारिणी॥२९॥

यो हि गोत्वादिपदार्था एवाकाङ्क्षासन्निधियोग्यतावशेन परस्परात्मसंसर्गं प्रमिमत इति प्रतिजानीते, तस्यापि पदार्थाः पदार्थान्तरमात्रसंसर्गं न प्रतिपादयन्ति, विशेषसंसर्गनिष्ठत्वात् प्रयोगप्रत्यययोः, अन्यथासिद्धत्वाच्च सामान्यान्वयस्य। अथ पदार्थविशेषसंसृष्टस्वात्मानं पदार्थः प्रतिपादयति, तर्हि पदार्थान्तरावगमाय न पदान्तरोपादानमर्थवद्, एकेनापि पदार्थेन विशिष्टसंसर्गसिद्धेः। अथ संसर्गप्रतिपादनसमर्था अपि पदार्था न परस्परमनपेक्ष्य प्रतिपादयन्ति, शक्तानामपि कार्यजनने सहकारिसव्यपेक्षत्वादिति। शब्देष्वपि तर्हि तुल्योऽयं न्यायः, तेषामपि संसर्गसमर्थानामन्योन्यापेक्षया प्रतिपादकत्वात्। अत एव सत्यपि गोशब्दस्य योग्येतराशेषपदार्थविशेषसंसर्गप्रति-

१. 'स्यै', २. '(य स्व' क. पाठः. ३. ✓

पादनसामर्थ्ये सहकारिकारणसमवधानभेदेन कदाचित् क्वचिदेव कार्यहेतुत्वमर्थपक्ष इव न निरुध्यते। ननु योग्येतराशेषविशेषसंसर्गाभिधानसमर्थे गोशब्दे प्रयुक्ते कथमानयतिना तदपेक्षितो विशेषः समर्प्यते, आनयतेरप्यनेकविशेषसंसर्गसमर्थतया क्वचिदेव नियमाभावात् । स्यादेतत्— प्रथमप्रयुक्त एव शब्दोऽन्विताभिधाने वर्तते, चरमप्रयुक्तास्तु स्वरूपाभिधानेन तदर्थं नियमयन्तीति । तन्न । शब्दानां प्रयोगप्राथम्यानियमात्, सर्वेषामन्विताभिधानसामर्थ्यस्योपगन्तव्यत्वान्नियमासिद्धेः । अथाख्यातपदमेवान्वितमभिधत्ते, पदान्तराणि तु स्वरूपाभिधानेन तदर्थं नियमयन्तीति । तन्न । प्रमाणाभावाद्, आख्यातपदरहितवाक्ये च पदार्थान्वयदर्शनस्यापह्नोतुमशक्यत्वाच्च। तस्मान्न परस्परापेक्षयापि संसर्गनियमसिद्धिरिति ॥ २९ ॥

तत्राह—

**रूपमात्रेऽनपेक्षत्वान्नियमो न विरुध्यते ।**
**अर्थेऽपि साम्याच्चोद्यस्य नातः पर्यायता तयोः ॥३०॥**

सत्यपि संसर्गाभिधानसामर्थ्ये गवादिशब्दानां गोत्वादिस्वरूपमात्रे सहकार्यनपेक्षया बुद्धिसामर्थ्यमस्ति । एकैकपदप्रयोगे तथा दर्शनात् । न हि शक्येऽपि सर्वत्र सहकार्यपेक्षैवानपेक्षैव वेति नियन्तुं शक्यते । उच्चालनपठनभोजनादिषु लोके क्वचिदपेक्षा क्वचिदनपेक्षेत्युभयथा दर्शनात्। अतः

---

१. 'र्यनपेक्षैवेति नि' क. पाठः.

परस्परानपेक्षजन्यबुद्धिगोचरानेव पदार्थानितरेतरसंसर्गितयासम्भूय पदानि प्रमिमत इति नानियमप्रसङ्गः। किन्त्वपदार्थेऽपि कृत्स्नविशेषसंसर्गबुद्धिसमर्थे सहकारिपदार्थान्तरमनेकसंसर्गबुद्धिसमर्थं केन विशेषणेन संसर्गं नियमयेत्। अथाभ्यर्हितत्वात् स्वरूपेणैव नियमयेत्, तर्हि पदमपि निरपेक्षबुद्धिगोचरेण पदार्थस्वरूपेण संसर्गं नियम्य प्रमिमत इति न कश्चिद् विरोधः। अत एवानपेक्षबुद्धिगोचरत्वाद् गोत्वादयो गवादिशब्दानां स्वार्था इति विशेषेणोच्यन्ते। स्यादेतद् — गामानयेति प्रयोगे पदयोरितरेतरसंसृष्टस्वार्थाभिधानात् पर्यायत्वप्रसङ्ग इति। नैतत् सारम्। एकस्मादेव हि पदात् सहकारिपदान्तरनिरपेक्षाद् यावानर्थः प्रतीयते, तावानेव यदि पदान्तरादपि केवलात् प्रतीयेत, स्यात् तयोः पर्यायत्वं, प्रसिद्धेः। न तथेह समस्ति, परस्परसापेक्षत्वनिमित्तैककार्यमात्रत्वात्। तस्मान्न पदान्तरवैयर्थ्यमनियमो वा ॥ ३० ॥

स्यादेतत्—प्रतिप्रयोगं संसर्गिभेदाद् भिद्यमाने संसर्गे शक्यभेदादेकस्य गोशब्दस्यानन्ताः शक्तयः कल्पयितव्याः प्रसज्येरन्निति। तत्राह—

**विचित्रसहकारित्वात् कार्यभेदस्य सिद्धितः।**
**शक्तिर्न भिद्यतेऽर्थेषु तथा शब्देषु चाक्षवत्॥ ३१॥**

अर्थोऽपि खलु संसर्गं प्रतिपादयन् प्रतिविशेषं संसर्गभेदाद् भिद्यमानशक्तिः स्यात्। अथ सहकारिपदार्थवैचित्र्यादेकयापि शक्त्या कार्यवैचित्र्यं सिध्यति। यथा चक्षुषो नीलपीतादिविषयसहकारिभेदादेकयापि रूपप्रकाशनशक्त्या

नीलपीतादिविज्ञानकार्यभेदः । तर्हि शब्देष्वपि सहकारिभेदात् कार्यभेदो न दण्डवारितः ॥ ३१ ॥

ननु प्रतिविशेषमभिधेयभेदानन्त्यात् सम्बन्धग्रहणमशक्यसम्पादनम् । शक्यसम्पादने च शब्दोऽनुवादक एव स्यात् । अर्थपक्षे न सम्बन्धज्ञानापेक्षा, शब्दधर्मत्वादस्येत्यत आह —

**उपलक्षणयोगेन धूमाग्न्योरिव सङ्गतेः ।**
**व्युत्पत्तियोगो नातः स्यात् संसर्गेष्वनुवादता ॥ ३२ ॥**

यथेह धूमजातीयानामग्निजातीयैर्व्याप्तिरित्युपलक्षणयोगेन विशेषाणामपि सम्बन्धो गृह्यते, तावतैव विशिष्टदेशे धूमविशेषदर्शनात् तथाविधाग्निविशेषोऽपि गम्यते । न च सावगतिरनुवादः । एवं योग्येतरत्वोपलक्षितविशेषसंसृष्टस्वार्थे सामर्थ्यमित्युपलक्षणोपादानेन कृत्स्नसंसर्गसामर्थ्यप्रतिपत्तावपि न विशिष्टसमभिव्याहाराद् विशिष्टसंसर्गप्रतिपत्तिरनुपपन्ना । नापि सा प्रतिपत्तिरनुवादः, वह्निसामान्यमात्रवदनुमाने पदार्थस्वरूपमात्रं शाब्दे संसर्गेऽनूद्यत एव । उपलक्षणेऽपि स्वरूपमात्रस्य नियमेन प्रमाणान्तरसिद्ध्यपेक्षणात् । अतः संसर्गे नानुवाद इति सिद्धम् ॥ ३२ ॥

स्यादेतद् — यदि पदान्तरेणानभिहितेन संसृष्टं गोत्वं गोशब्देनाभिधीयेत, तदा पदान्तरवैयर्थ्यं स्यात् । अथाभिहितेन, तदेतरेतराश्रयता । आनयनेऽभिहिते तदन्वितं गोत्वं गोशब्दोऽभिधत्ते । गोत्वे चाभिहिते तदन्वितमानयनमानयतिरिति । तत्राह—

क्रमेणावगतानर्थान् युगपत् संहतानथ ।
प्रमिमीरन् पदानीति नान्योन्याश्रयदोषता ॥ ३३ ॥

अन्योन्यानपेक्षमेव पदेभ्यः पदार्थाः क्रमेण प्रतीयन्ते। अन्त्यपदोच्चारणानन्तरं च तानेव पदार्थानितरेतरसंसर्गितया तान्येव प्रतिपादयन्ति पदानीति न दोषः । अथवा नेहानन्वयिपदार्थावगतिः पूर्वभाविन्यपेक्ष्यते । किं त्वानुषङ्गिकी सा, अतो युगपत् परामृष्टानि पदानि संसर्गं प्रतिपादयन्तीत्यभिधीयमानेनैवान्वय इति स्थितम् । तस्मात् प्रयोगसमयेऽन्वयव्यतिरेकाभ्यां न स्वरूपमात्रे सामर्थ्यमवधारितं, किन्तु संसर्गे इति स्थितम् । यत्त्वेकैकस्मात् पदात् पदार्थमात्रमेवावसीयते, न संसर्गः, अतस्तत्रैव सामर्थ्यमिति । तदपि न । संसर्गसमर्थस्यैव सहकारिविकलस्य स्वरूपमात्रेऽपि बुद्धिहेतुत्वोपपत्तेः । अन्यथा पदानां पदार्थेषु शक्तयः, पदार्थानां च संसर्गे शक्तय इति शक्तिकल्पनागौरवं च स्यात् । स्यादेतत् । पदपक्षेऽपि पदार्थान्तरविशिष्टस्वार्थे सामर्थ्यमिति शक्तेः सविशेषणत्वं प्रसज्यत इति । तन्न । अर्थशक्तेरप्यर्थान्तरव्यावृत्तस्वात्मविषयत्वेन सविशेषणत्वात । अतः पदार्थस्वरूपानुवादेन संसर्गबुद्धिः पदेभ्य एवेष्यताम् । अत्राह कश्चिद् — नाभिधानसामर्थ्यजन्योऽनुवादः पदात् पदार्थबुद्धिः । किन्तु स्मृतिप्रमाणसंशयविपर्यासानामन्यतमेन पदात् पदार्थज्ञानेन भवितव्ये परिशेषात् स्मृतिरेवैषा । सा च पूर्वोपलम्भ-

१. 'कल्पप' ख. पाठः.

संस्कारनिमित्तां नाभिधानमपेक्षते । शब्दज्ञानं चार्थसम्बन्धिशब्दविषयतया संस्कारोद्बोधद्वारेण सम्बन्ध्यन्तरस्मृतिनिमित्तमिति ॥ ३३ ॥

कोऽयं पदस्य पदार्थेन सम्बन्धः। तद्बुद्धिसामर्थ्यलक्षण एव । तत एव तर्हि सामर्थ्याद् बुद्धिरिष्यतां, किं शक्तिसम्बन्धिनि स्मृतिसामर्थ्यान्तरकल्पनया । नैतत् सारं, विशिष्टेऽर्थे समर्थस्य स्वरूपमात्रे शक्त्ययोगात्, तावन्मात्रे बुद्ध्यनुपपत्तेरिति । तत्राह—

**स्वरूपमात्रे शक्तं चेत् कथं तत् स्मारकं भवेत् ।**
**शक्त्येकदेशयोगाच्चेच्छक्तिरेवास्तु बोधिका ॥ ३४ ॥**

विशिष्टार्थसम्बन्धिनः शब्दादेकदेशस्मृतिरिव तावन्मात्रेऽभिधानकार्यमप्युपपद्यत इत्यर्थः ॥ ३४ ॥

किञ्च,

**नियमाच्छब्दतो बुद्धेर्न तथान्वयिदर्शनात् ।**
**अर्थेषु नैव शक्तिः स्यात् संसर्गेऽपि च तत्स्मृतेः ॥ ३५ ॥**

न तावत् सम्बन्धिदर्शनात् सम्बन्ध्यन्तरबुद्धिः, नियतानुदर्शनाद्, बहुविधत्वाच्च सम्बन्धिनां वक्त्रादीनामेकत्र नियमेन स्मृत्ययोगात् । सम्बन्धग्रहणसंस्कारवतश्च शब्दोपलब्धेर्नियमेनार्थबुद्धिर्जायते । संस्कारजन्यायां च स्मृतौ शब्दान्वय-

---

१. 'त्ताभि', २. 'र्ज्ञा' ख. पाठः.

व्यतिरेकावुपेक्ष्येयाताम्। न च शब्दस्य स्मृतिहेतुसंस्कारोद्बोधकतयान्यथासिद्धिः, संस्कारोद्बोधस्य स्मृतिव्यतिरिक्तस्यानिरूपणाद्, वक्त्रादिविषयसंस्कारोद्बोधकप्रसङ्गाच्च। तस्मात् सम्बन्धज्ञानसंस्कारविशिष्टमभिधानमेव पदार्थज्ञानेषु पुष्कलकारणमिति नियमेनानुवाद एवैष जायते। पूर्वोपलम्भतद्देशकालादिसम्भेदरहितत्वाच्च न स्मृतिः। किंच संसर्गज्ञानसमयेऽपि पदार्थांशेषु संस्काराणां भावात् स्मृतिमात्रोपपत्तेर्न कदाचिदपि तेष्वभिधानकार्यं सिध्येत्। ततश्च शक्तिसम्बन्धज्ञानान्न[1] सम्बन्धिदर्शनात् सम्बन्ध्यन्तरस्मृतिः। न हि संसर्गज्ञानसमये सत्स्वपि संस्कारेषु अभिधानजनिता पदार्थबुद्धिर्न प्रागिति नियन्तुं शक्यते। तस्मादभिधानजन्योऽयमनुवादः। स एव चैकैकस्मात् पदात् प्रथममुत्पद्यते, पुनस्तेभ्य एवेतरेतरसहकारिभ्यः संसर्गः प्रतीयते शक्तिकल्पनालाघवादिति स्थितम्[2]॥ ३५॥

अपिच प्रमाणान्तरावसितपदार्थेभ्यः संसर्गे प्रमीयमाणे कथं शब्दोपलब्ध्यन्वयव्यतिरेकवतः संसर्गप्रत्ययस्य पदार्थहेतुत्वं कल्प्यते। स्यादेतत्। पदार्थानां संसर्गव्यापारं तच्छक्तिं वा पदान्यभिव्यञ्जयन्ति न प्रमाणान्तरं, ततश्च संसर्गप्रत्ययः। किञ्च सम्बन्धज्ञानात् प्राक् पदानामदृश्यमाने संसर्गहेतुत्वे क्रमवत्पदार्थावगमात् पराचीनः संसर्गप्रत्ययः कथं शब्दनिबन्धनः स्यादिति। तत्राह—

१. 'नं न स' ख. ग. पाठः. २. 'तिः॥' क. पाठः.

**संसर्गशक्तेर्न व्यक्तिर्व्यापारस्यापि शब्दतः ।**
**नाभिधेयद्वयं तद्धि न शब्दः कारणं तयोः ॥ ३६ ॥**

न च पदस्याभिधेयविषयं व्यापारान्तरमस्ति, येन पदार्थावगतौ संसर्गशक्तितद्व्यापारौ व्यज्येयाताम् । न च पदेभ्यस्तयोः प्रतिपत्तिः, अनभिधेयत्वात् । न च पदजन्यं विज्ञानं पदार्थातिशयहेतुः, ज्ञानस्य स्वविषयविकाराहेतुत्वात् । न च सम्बन्धग्रहणापेक्षया संसर्गप्रतिपादकेषु पदेष्वानुषङ्गिकपदार्थप्रतिपत्तेः संसर्गहेतुत्वं शक्यते कल्पयितुं, शक्तिकल्पनागौरवाद्, अन्यत्रादृष्टसामर्थ्यत्वाच्च । न च पदार्थेषु पदावगतेषु कश्चिदतिशयो न मानान्तरावगतेष्विति युक्तम् । तस्मात् पदनिबन्धनः संसर्गप्रत्ययः ॥ ३६ ॥

ननु

"पश्यतः श्वैतिमारूपं (?) हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः[2] ॥"

इति पदार्थेभ्योऽपि संसर्गप्रत्ययो दर्शितः, इत्यत आह—

**नार्थाधीनस्तु संसर्गबोधो मानान्तरं विना ।**
**परिशेषानुमानाद्धि श्वेतोऽश्वो धावतीति धीः ॥ ३७ ॥**

खुरनिष्पेषशब्दानुमितस्य धावनस्य परिदृष्टस्य श्वैत्यस्य च धर्म्यपेक्षायां द्रव्यान्तरस्यासम्भावनात् परिशेषाद्धेषा-

१. 'यं' क. पाठः. २. 'धीः प' ख. ग. पाठः.

* 'श्वैतिमं रूपम्' इति स्यात् । श्वेतिमशब्दाद् अर्शआद्यचि श्वैतिमं श्वैत्ययुक्तमित्यर्थः । रूपमाकृतिम् ।

शब्दानुमिताश्वधर्मिनिष्ठतामनुमिमानः श्वेतोऽश्वो धावतीति प्रतिपद्यते, न पदार्थान्तरमात्रेभ्यः ॥ ३७ ॥

किञ्च —

**नान्तर्गमः प्रमाणेषु पदार्थानामसम्भवात् ।**
**अविनाभावरूपादेर्न शाब्दे तदलक्षणात् ॥ ३८ ॥**

न तावच्चक्षुरादिवत् पदार्थाः संसर्गमवगमयन्ति, अनवबुद्धानामहेतुत्वात् । नाप्यनुमानवद्, अविनाभावाभावात् । नाप्यर्थापत्त्या, संसर्गमन्तरेणापि पदार्थोपपत्तेः । सादृश्याभावौ[2] च नियतविषयौ । न च शाब्देऽन्तर्भावः, शब्दादर्थबुद्धिरिति[3] लक्षणात् । ननु शब्दावबुद्धपदार्थजन्योऽपि संसर्गबोधः शाब्द एव । न । अर्थानां संसर्गेण सम्बन्धाभावाद्बोधकत्वानुपपत्तेः[4] । नन्वाश्रयाश्रयिलक्षणः सम्बन्धो विद्यते । न । तावन्मात्रस्याबुद्धिनिमित्तत्वात् । न हि शब्दप्रतिपन्नेऽपि घटे तदाश्रयो रसः प्रतीयतेऽविनाभावादिव्यतिरेकेण । ननु शब्दा एव संसर्गं बोधयन्ति, किन्तु पदार्थबुद्धिव्यवधानेन । तदुक्तं —

“वाक्यार्थमितये तेषां प्रयुक्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥”

इति । नैतत् सारं, पदानां पदार्थबुद्धिषु पर्यवसानात् । ज्वालानामिव पाकस्य पदार्थानां संसर्गस्यानिमित्तत्वात् । अथ शब्दा एव पदार्थबुद्ध्युपकरणाः संसर्गमवगमयेयुः । किमु-

---

१. ‘नम् अवि’, २. ‘श्य’, ३. ‘र्थे’ क. पाठः. ४. ‘बा’ ख. पाठः. ५. ‘दे’, ६. ‘न्तीति, कि’ क. पाठः.

पकरणैः। गृहीतसम्बन्धानामेव शब्दानामन्वयव्यतिरेकव-त्त्वात्। तस्मान्न पदार्थेभ्यः संसर्गप्रत्ययः प्रमाणपक्षपाती॥३८॥

कथं पुनरन्विताभिधाने लक्षणावृत्तिः, यावता न मुख्यमर्थमर्थान्तरसंसर्गितया प्रतिपादयति। नापि लक्ष्यमाणं, तदभिधायकपदाभावात्। अतो लक्ष्यमाणार्थनिबन्धनस्तत्र संसर्गः। अध्याहारे चाध्याह्रियमाणार्थनिबन्धन एव संसर्गः, तदभिधायकपदाभावादिति। तत्राह —

**लक्षणायां च तद्वाचिपदात् संसर्गधीर्भवेत्।**
**अध्याहारे च शब्दार्थापत्तिलब्धात् पदाद्धि सा॥ ३९॥**

मञ्चशब्दः क्रोशनेन संसृष्टस्वार्थं प्रतिपादयितुं प्रवृत्त-स्तत्र विरोधात् क्रोशनसंसर्गितया स्वार्थबुद्धिद्वारेण पुरुषे बुद्धि-मुत्पादयति। क्रोशनसंसर्गितया शब्दात् प्रतिपन्नो हि मञ्च-पदार्थः पुरुषे क्रोशनसंसर्गिणि बुद्धिहेतुर्न केवल इत्यतः स-न्निहितपदाभिधेयार्थ[1]संसर्गिपदार्थप्रतिपादनाय प्रवृत्तं पदं व्य-वधानेनाव्यवधानेन वा यत्राकाङ्क्षितार्थप्रतिपत्तिहेतुः तत्सं-सर्गस्तन्निबन्धन इति नान्विताभिधानपक्षस्वीकारविरोधः। व्य-क्तिलक्षणायामपि सामान्यबुद्धेरव्यभिचारेण व्यक्तौ पर्यवसा-नात् तत्सामान्यसंसर्गाभिधानमेव विशेषसंसर्गेऽपि निमित्तम्। अर्थवादिनां चाभिहितानामसंसर्गादन्वयिनां चानभिधेयत्वात् सद्वारं प्रतिपादकत्वमवि[3]शिष्टम्। अध्याहारे च प्रमेयैकदेश-

१. 'ने सं' ख. ग. पाठः. २. 'र्थं' क. पाठः. ३. 'व' ख. ग. पाठः.

समर्पणसमर्थप्रमाणैकदेशविषयशब्दार्थापत्तिप्रापितपदोपसंहारेणान्वितताभिधानसिद्धिः। अन्यथाध्याह्रियमाणार्थसंसर्गस्यार्थनिबन्धनत्वेनानागमिकत्वप्रसङ्गात् ॥ ३९ ॥

तस्मादुपसंहरति —

**अतः पदेभ्यः संसर्गस्तच्छक्तिभ्यः प्रमीयते।**
**इति न्यायैर्यथाशक्ति व्युत्पत्तिं प्रत्यपीपदम् ॥ ४० ॥**

उक्तमन्विताभिधानात् पदेभ्य एव वर्णात्मकेभ्यः संसर्गबुद्धिरिति ॥ ४० ॥

अपिच —

**शाब्दत्वं नान्यथैव स्यात् पदवृन्दस्मृतेर्विना।**
**महावाक्येन चेत् तेऽपि निर्विकल्पेतरा हि सा ॥ ४१ ॥**

इतोऽपि वर्णात्मकानामेव पदानां वाक्यार्थप्रतिपादकत्वमङ्गीकर्तव्यम। अन्यथा तस्य शाब्दत्वविरहादप्रामाण्यप्रसङ्गात्। ये तु मन्यन्ते — वर्णोपलम्भजनिताः संस्कारा एव स्मारकाः तदतिरेकिणो वा पदार्थबुद्धिसामर्थ्यावच्छिन्नतया पदशब्दभागिनः संसर्गं प्रतिपादयन्तीति, तैरपि संसर्गस्य शाब्दत्वमभिप्रेतमात्मीयेन मतेन निराकृतं भवति। कथं हि शब्दोपलब्धपदार्थजनितसंसर्गबोधमशाब्दं ब्रुवता तदुपलम्भजनितसंस्कारजनितसंसर्गबोधस्य शाब्दत्वमिष्यते, न हि चाक्षुषज्ञानसंस्कारजनितं ज्ञानं चाक्षुषं प्रमाणं वा भवति।

---

१. 'त्वेऽनाग', २. 'प्रतिपत्तिः', ३. 'ब्धि' क. पाठः. ४. 'तबो' ख. ग. पाठः.

अनधिगतार्थविषयताभावादिति चेद्, इतरत्रापि संस्कारजन्यत्वे तथात्वं केन वार्यते । तत्राह[1] — वर्णपक्षेऽन्त्यपदप्रत्ययानन्तराशेषपदावमर्शिस्मृतिज्ञानं संसर्गनिमित्तं महावाक्येऽशक्यसम्पादनमिति ज्ञानानपेक्षाः संस्कारा एव तद्धेतव इति । नैतत् सारं, महावाक्ये न शाब्दी प्रमितिः । किन्त्ववगतसंसर्गाणामेकप्रयोजनसम्बन्धितयान्वयोऽर्थनिबन्धन एव । यत्र पदैकवाक्यता तत्रैव शाब्दी प्रमितिः । तत्र चाल्पत्वात् पदानां नानुसन्धानानुपपत्तिः । इतरस्यापि संसर्गप्रमितेः सविकल्पकत्वात् तद्वाचकाशेषपदानुषङ्गो न शक्यते निराकर्तुम् । अशेषपदावमर्शसिद्धये[2] च वाक्यं पुनः पुनः पठ्यते । संस्कारपक्षे तेषां सकृदुत्पत्तेर्न पुनः पुनः पठनापेक्षा । क्रमोपलब्धाशेषपदावमर्शिस्मृत्युदये संस्कारप्रचयापेक्षा लोकेऽन्वयव्यतिरेकसमधिगता । अनन्वयिपदाव्यवहितमेकमिदं वाक्यमिति समस्तपदानवमर्शे नोपपद्यते । संसर्गप्रत्ययान्यथानुपपत्त्या वा समस्तपदा[3]वमर्शः कल्प्यताम् । सम्बन्धग्रहणे च समस्तपदावमर्शाभावे न संसर्गसामर्थ्यप्रतिपत्तिः । तस्मात् पदवृन्दस्मृतेरेव संसर्गप्रतिपत्तिः । योऽप्यन्त्यपदार्थावगमानन्तरमशेषपदार्थावमर्शं संसर्गहेतुं कल्पयति, तस्यापि सविकल्पकतया पदावमर्शस्य तद्वाचकाशेषपदावमर्शे वक्तव्ये किमुभयानुस्मरणेन कल्पितेन । तस्मात् समस्तपदावमर्शादेव संसर्ग इति स्थितम् ॥

---

१. 'अ' क. पाठः. २. 'ये वा' ख. पाठः. ३. 'दाम' ख. ग. पाठः.

उक्तमन्विताभिधानम् । इदानीं तत्रैव किञ्चिद् विशेषं परामृशति—

**किं कार्यान्वयिनं स्वार्थं किं वार्थान्तरसङ्गतम् ।**
**शब्दोऽभिधत्त इत्येतदधुना संविमृश्यते ॥ ४२ ॥**

तत्र कार्यान्वयवादी स्वपक्षं[1] वर्णयति—

**प्रतिपत्तुः प्रवृत्त्या हि शब्दविज्ञानबन्धना ।**
**कार्यसंसर्गधीरेव व्युत्पत्त्याध्यवसीयते ॥ ४३ ॥**

प्रतिपत्तुः प्रवृत्तिलिङ्गेन विशिष्टकार्यज्ञानमनुमाय तदन्वयिषु पदार्थेषु पदानां सामर्थ्यमवधारयति ॥ ४३ ॥

ननु बालेन यत् स्वात्मनि प्रवृत्तिनिमित्तमवगतं, तदेव प्रतिपत्तुरप्यनुमीयते, तर्हि[2] हितज्ञानं तत्साधनज्ञानं वा प्रैषादिर्वेङ्गितादिर्वा दर्शितैः[3] प्रवृत्तिनिमित्तमित्यत आह—

**न प्रवृत्तिर्हितोपायात् तथेष्टादाशयाच्च न ।**
**व्यभिचारादबाधाच्च कार्यसिद्धेः फलादिषु ॥ ४४ ॥**

अवधारिते च फले तत्साधने च नातीतादिरूपे प्रवर्तते । ततो हितादयोऽपि कालत्रयविविक्ततया कार्यबुद्धिगम्याः प्रवृत्तिहेतवः । तत्र व्यभिचाराद्धितादीनामव्यभिचाराच्च कार्यबुद्धेः सैव प्रवृत्तिहेतुरिति ॥ ४४ ॥

ननु तदेव हि कार्यं, यदिष्टसाधनम् । तदुक्तं—

"कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः"

---

१. 'क्षं व्याव' क. पाठः. २. 'च' ख. ग. पाठः. ३. 'तं' ख. पाठः.

इति । अथवा हितसाधनज्ञानाधीनत्वात् कार्यादिबुद्धेस्तदेव कार्यताबुद्धिद्वारेण प्रवृत्तिनिमित्तामिति तत्रैव शब्दसामर्थ्यं कल्प्यत इत्यत आह —

कार्यं नेष्टाभ्युपायत्वं कृतिव्याप्यं हि तत् स्मृतम् ।
तदेवाव्यवधानात् तत्सिद्धत्वेऽपि प्रवर्तकम् ॥ ४५ ॥

प्रसिद्धस्तावत् कार्येष्टसाधनयोर्भेदः । इष्टसाधनज्ञानाधीनमपि कार्यताज्ञानमव्यवधानात् प्रवृत्तिनिमित्तमुच्यते । न ह्यन्वयव्यतिरेकाधीनं हितसाधनमन्वयव्यतिरेकेण[2] प्रवृत्तिनिमित्तम् । तस्मात् कार्यमेव प्रवृत्तिहेतुरिति स्थितम् । तत्र केचिदाहुः — शाब्दव्यवहारे शाब्दभावना प्रवृत्तिहेतुरिति । तत्राभूतप्रादुर्भावफलं करोत्यर्थमात्रं भावना । तत्रार्थव्यापारोऽर्थभावना । शब्दव्यापारस्तु स्वाभिधेयज्ञानजननलक्षणः शब्दभावना । सा च शब्दकर्तृकार्थज्ञानभाव्यनिष्ठा शब्दज्ञानकरणिका सम्बन्धज्ञानसंस्कारेतिकर्तव्यताका सर्वशब्दानामविशेषवती । लिङादिशब्दे[3] तु भिद्यते । सा[4] लिङादिकर्तृकार्थभावना[5]लक्षणपुरुषप्रवृत्तिभाव्यनिष्ठा स्वज्ञानकरणिका स्तुतिनिन्दार्थवादादिज्ञानेतिकर्तव्यताका च समाश्रीयते । कथम् । पाकं करोतीति पचतीत्याख्यातार्थस्य करोतिना व्याख्यानात् सर्वाख्यातानां तावत् करोत्यर्थोऽभिधेयः[6] । लिङादीनां तु विधिविवक्षया प्रयुज्यमानानां चेतनविषयप्रयोगित्वात् पुरुषप्रयत्नः पुरुषार्थे-

१. 'त्वात् कृ', २. 'को न प्र' ख. ग. पाठः. ३. 'ब्देषु तु', ४. 'सा हि लि' क. पाठः. ५. 'ना च न पु' ख. पाठः. ६. 'यं' ग. पाठः.

भाव्यनिष्ठो धात्वर्थकरणः प्रयाजादीतिकर्तव्यताकोऽर्थभावनालक्षणः करोत्यर्थोऽभिधेयः । तत्र स्वाभिधेयार्थभावनाज्ञानजननो[1] लिङादिशब्दव्यापारः स्वाभिधेयार्थभावनामपि भावयतीति विशेषः । कथम् । लिङादिशब्दश्रवणानन्तरं[2] प्रवृत्तिदर्शनाच्छब्दमात्रस्यागृहीतसम्बन्धस्याप्रवर्तकत्वात् प्रवृत्तिहेतुं कञ्चिदर्थमभिधाय शब्दः प्रवर्तयतीति गम्यते । तत्रार्थान्तराभिधानकल्पनायां कल्पनागौरवात् स्वाभिधानव्यापारमभिधेयज्ञानजननलक्षणमभिधाय तद्द्वारेणार्थभावनां[3] प्रवृत्तिं जनयतीति परिशेषार्थापत्तिभ्यां गम्यते[4] । ततश्चार्थभावनाभाव्यनिष्ठा शब्दभावना । न केवलं तज्ज्ञानभाव्यनिष्ठाभिधानजन्यं शब्दभावनाविषयं विज्ञानं प्रवर्तकज्ञानत्वात् प्रवृत्तिलक्षणभाव्यनिष्पादनद्वारेण शब्दभावनां प्रति कारणतामश्नुते[5] । अंशत्रयसहितार्थभावनाविषयस्तुतिनिन्दार्थवादादिज्ञानमपि प्ररोचनाद्वारेण प्रवृत्तिहेतुत्वाच्छब्दभावनां प्रतीतिकर्तव्यतामनुभवति । तदेवमंशत्रयसहिता शब्दभावना शाब्दव्यवहारे प्रवृत्तिहेतुरिति स्थितम् ॥ ४५ ॥

एतन्निराचष्टे —

**प्रवृत्तिहेतुर्दृष्टान्ते न दृष्टा शब्दभावना ।**
**लोकासिद्धेऽपि शब्दार्थे नार्थापत्तिश्च गौरवात् ॥ ४६ ॥**

---

१. 'ने', २. 'दिश्र', ३. 'नां', ४. 'कल्प्यते' क. पाठः.
५. 'क' ख. पाठः.

न तावदियं शब्दभावना बालेन प्रवृत्तिहेतुतया स्वात्मनि समधिगता, येन प्रतिपत्तुरपि शब्दार्थतयानुमीयेत । न च परिशेषार्थापत्तिभ्यां स्वाभिधेयाभिधानमवगम्यते, लोकसिद्धकार्यानुमानेनैवान्यथासिद्धेः । एकस्य शब्दस्य शब्दार्थभावनाभिधेयद्वयकल्पनागौरवं च । अभिधेयज्ञानगम्ये चाभिधानव्यापारे न तत्र शब्दसामर्थ्यकल्पना, अन्यथासिद्धत्वात् तज्ज्ञानस्य । न[1] च युगपदेकस्माच्छब्दादभिधेयद्वयविषयज्ञानद्वयोत्पादः, कर्तृसङ्ख्यार्थभावनयोरिव शब्दार्थभावनयोरेकवाक्यताभावात् । न च क्रमेण, शब्दस्य विरम्यव्यापाराभावात् । तस्मात् स्वरूपानुपपत्तेरप्रवर्तकत्वाच्च तस्याः कार्यमेव प्रवृत्तिहेतुरिति स्थितम् ॥ ४६ ॥

अत्रोच्यते —

अन्वयव्यतिरेकाभ्यामुपदेशादिभूमिषु ।
व्युत्पाद्यन्तेऽन्यसंसृष्टे बालाः कार्यान्विते न तु ॥ ४७॥

न च शब्दसमनन्तरजन्यप्रवृत्तिलिङ्गानुमानैकोपायैव शब्दार्थसम्बन्धावगतिः । किन्तूपदेशोपायादपि। तथाहि — बालेभ्यो जनन्यादिभिः प्रायेणोपदिश्यन्ते शब्दार्थसम्बन्धाः । ते च तत्र प्रयोगप्रत्यययोरिवान्वयव्यतिरेकाभ्यां विशेषसम्बन्धमवधारयन्ति । नन्वयं घटोऽयं पट इत्याद्युपदेशोऽपि प्रयोगमूल एव । प्रयोगे च कार्यान्विते सङ्गतिग्रहः, तेनोपदेशोऽपि कार्यनिष्ठ इति । तन्न । प्रयोगस्याप्युपदेशमूलत्वसम्भवान्नेदम्प्रथमता तयोः, परस्परमूलतोपपत्तेः । न च

१. 'न यु' क. पाठः.

प्रयोगे कार्यनिष्ठतेत्युपदेशेऽपि तन्निष्ठतावगमः, व्युत्पत्तुः शब्दसामर्थ्यविषयतया कार्यस्याप्रतीतिरुपदेशेऽप्रतीयमानकार्यकल्पनाद् वरं प्रयोगेऽपि संसृष्टमात्रस्य प्रतीयमानस्याभिधेयत्वकल्पनम्। ननूपदेशे बुद्धिसामर्थ्यं शब्दस्य प्रतिपत्तुं न शक्यते प्रयोग इव बुद्धिकार्यावगमे, मानाभावात्। कथं तर्हि उपदेशानन्तरं प्रयुक्ताच्छब्दादर्थं प्रतिपद्यन्ते बालाः। क्वचित् प्रयोगे शब्दस्य बुद्धिसमर्थतावगमादिहापि तत्सामान्याद् बुद्धिसामर्थ्यप्रतिपत्तिरिति चेत्, तथाप्युपदेशेषु कार्यमन्तरेण बुद्धिसामर्थ्यसिद्धिः। तथाच रागशक्तीच्छाद्वेषादिविषयाः शब्दार्थसम्बन्धाः प्रायेण व्युत्पाद्यन्ते। तेषां प्रयोगसमवायिप्रवृत्तिविषयदर्शनायोगात्। तथा[1]च देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादिष्वतीतानागतवर्तमानार्थनिष्ठेष्वपि वाक्येषु प्रसिद्धार्थ[2]पदसमभिव्याहारेणाप्रसिद्धार्थस्यापि पदस्य सम्बन्धोऽवगम्यते। तथा निगमनिरुक्तनिघण्टुव्याकरणेभ्योऽपि स्फुटतरा शब्दार्थव्युत्पत्तिः। न चैतेषु कार्यार्थतावगमोऽप्रतीतः। कथं पुनरुपदेशादिषु संसृष्टस्वार्थे सामर्थ्यावगमः। वाक्यरूपत्वादुपदेशादीनां पदान्तराभिधेयपदार्थसंसृष्टस्वार्थस्य सर्वत्राव्यभिचारात्, तथागृहीतसम्बन्धादपि शब्दात् संसृष्टार्थावगमात्। तस्मान्न कार्यसंसृष्टे नियमेन सामर्थ्यसिद्धिः॥४७॥

किञ्च—

**कार्यान्विते च शब्दार्थे प्रत्येकं सङ्गतिग्रहात्।**
**शाब्दप्रमाणहानिः स्यान्नान्यत्रे सङ्गतिग्रहः॥ ४८॥**

---

१. 'था दे' क. पाठः. २. 'र्थस्या' ग. पाठः.

'यजेत स्वर्गकाम' इति श्रौताद् वाक्यान्नापूर्वार्थप्रमितिलाभः । यतो नियोज्यविषयाभिधायिनोः पदयोः सम्बन्धज्ञानकाले कार्यसंसृष्टो नियोज्यो विषयश्च सिद्धः । तत्र विषयनियोज्यव्यावृत्ते[1] नियोगे शब्दोऽनुवादः स्यात् । न हि विषयनियोज्य[2]सम्बन्धः शाब्दः, किन्त्वर्थनिबन्धनः । अन्यान्विते तूपलक्षणोपादानेन धूमादग्निज्ञानवदपूर्वार्थप्रमितिर्युज्यते । स्यादेतत् । अनवगतस्यैव कार्यस्य सम्बन्धज्ञानविषयत्वान्न विषयनियोज्यव्यावृत्ते कार्यशब्दोऽनुवाद इति । नैतत् सारं, यतोऽनवगते[3] कार्ये तत्संसृष्टपदार्थान्तरानवगमादगृहीतसम्बन्धा एव सर्वे शब्दा बोधयेयुरिति प्रसज्येत[4], यतो नानवगतेऽर्थे सम्बन्धज्ञानम् । अथाज्ञादिपूपाधिषु कार्योऽप्यर्थः प्रतिबिम्बितोऽवगम्यत इति, तथापि तत्स्वरू[5]पसंसृष्टेषु सर्वपदार्थेषु सम्बन्धज्ञानाय प्रमाणान्तराधिगतेषु सिद्धं शब्दानामनुवादकत्वम् । अथ प्रवर्तकत्वं प्रमाणान्तरगृहीततया, शब्दार्थप्रवर्तकविशेषस्तु विषयनियोज्यव्यावृत्तो नियोगः प्रमीयत इति, तथापि शाब्दः संसर्गोऽनुवादः । विशेषस्तु परिशेषानुमानगोचर इति नापूर्वार्थप्रमितिलाभः । तस्मादुपलक्षणोपादानेनान्विते सम्बन्धग्रहेऽपूर्वार्थसिद्धिः ॥ ४८ ॥

किञ्च —

**संसर्गप्रतियोगित्वं[6] नानुमेयस्य कृत्स्नतः ।**
**प्रतिपत्त्यन्तरे मा भूदुपायत्वं समं तयोः ॥ ४९ ॥**

---

१. 'त्तेर्नि', २. 'ज्यः' क. पाठः. ३. 'र्वे' ख. ग. पाठः. ४. 'त अथा' क. पाठः. ५. 'पं' ख. पाठः. ६. 'त्वान्ना' क. ग. पाठः.

यदि प्रवृत्त्युन्नीयमानप्रत्ययविषयशब्दसामर्थ्यप्रतिपत्तावनुगम्यमानं कार्यमपि सर्वशब्दसामर्थ्यविषयनियामकत्वेन प्रयोजकं कल्प्येत, तर्हि सत्येव प्रमाणान्तरमितत्वादौ प्रयोगप्रत्ययाभ्यां सम्बन्धज्ञानाद्, असति चाज्ञानात्, तस्यापि सर्वशब्दसामर्थ्यविषयनियामकत्वं स्यात्। ननु प्रवृत्त्या प्रवर्तकज्ञानमनुमाय तत्रैव शब्दसामर्थ्यं प्रतिपद्यते, कुतः प्रमाणान्तरमेयत्वादेः प्रयोजकत्वावकाशः। सत्यम्, अस्मिन् प्रयोगे तथास्तु। किन्तु प्रयोगान्तरेषु भिन्नसंसर्गेष्वनुवर्तमानं प्रयोजकं मृग्यते। ननु कार्यं सर्वत्रानुवर्तते। सत्यं, प्रमाणान्तरमेयत्वादेरप्यस्त्वनुवृत्तिः, अन्वयव्यतिरेकनियमात्। ननु प्रमाणान्तरमेयत्वादिः[1] शब्दसामर्थ्यविषयो न भवतीति प्रागेव वर्णितं[2], तर्हि प्रमाणान्तरमितत्वाद्युपलक्षितकार्यसंसृष्टस्वार्थे सामर्थ्यमिति कल्प्यताम्। ननु शब्दसामर्थ्यविषयत्वे सति यदनुवर्तमानं तदेव प्रयोजकम्। तन्न, एवं विशेषणाद् वरमनुवर्तमानं प्रयोजकमिति ग्रहणम्। ननु मानान्तरप्रमितत्वाद्युपलक्षितकार्यान्वित इति ग्रहणाद् वरं कार्यान्वित इति ग्रहणम्। सत्यम्, ततोऽपि लघीयोऽन्विते सामर्थ्यमिति ग्रहणम्। ननु प्रमाणान्तरमितत्वादेरन्वयव्यतिरेकौ तस्य सम्बन्धग्रहणोपायत्वेनान्यथासिद्धौ, अवगम्य विवक्षित्वा प्रयुक्ते शब्दे प्रवृत्त्या चानुमिते वाक्यार्थज्ञाने सम्बन्धावगमादन्यथा चानवगमात्। अतो न तस्य सर्वशब्द-

१. 'दि', २. 'तः' क. पाठः.

सामर्थ्यविषयनियामकत्वमन्वयव्यतिरेकौ गमयतः । एवं तर्हि सत्येव कार्यज्ञाने प्रवृत्तिसिद्ध्या वाक्यार्थज्ञानमनुमाय तत्र सामर्थ्यज्ञानादन्यथा चाज्ञानात् तदन्वयव्यतिरेकावन्यथासिद्धौ । न च तस्य सर्वशब्दसामर्थ्यविषयनियामकत्वं गमयतः। तस्माद[1]न्यान्विते सामर्थ्यम् । ननु यदि कार्यतादेरन्वयव्यतिरेकवतोऽपि सर्वशब्दसामर्थ्यविषयनियामकत्वं परित्यज्योपायतयान्यथासिद्धिरुच्यते, उच्यतां तर्हि संसर्गस्यापि शब्दसामर्थ्यविषयताभावः । नैतत् सारम् । पदव्यतिरिक्तं वाक्यं पदप्रतिबुद्धपदार्थान् वा संसर्गहेतूनवलम्ब्य तत्प्रत्ययस्यान्यथासिद्धिर्वक्तव्या । तयोश्च[2] पक्षयोः शक्तिकल्पनागौरवात्, पदार्थानां च प्रमाणपक्षसङ्गमाभावादिति वर्णितदोषत्वाच्छब्दनिबन्धन एव संसर्गप्रत्यय इति कल्प्यते ॥ ४९ ॥

किञ्च —

कार्यान्विते च शब्दार्थे कार्यं[3] केनान्वितं भवेत् ।
गुणद्रव्यादिशब्दानां साक्षात् कार्येण नान्वयः ॥ ५० ॥

कार्यपदव्यतिरिक्तानां कार्यान्विते समार्थ्यम् । कार्यस्य तु स्वरूपेऽन्यान्विते वेति द्वै[4]रूप्यपरिहारायान्यान्विते सामर्थ्यमित्येकमेव प्रयोजकमुपादेयं, कार्यस्य कार्यान्तराभावात् । योऽपि कार्यान्वयान्विते सामर्थ्यमिति बकबन्धमिव प्रयोजकमाह, तस्यापि बहुविशेषणं प्रयोजकमिति दोषः । योऽपि

१. 'दन्वि' ग. पाठः. २. 'श्च शब्दयोः प', ३. 'कार्यान्वि', ४. 'वै' क. पाठः.

योग्येतरान्विते सामर्थ्यमङ्गीकृत्य कार्यार्थेनैवेतरेषामन्वययोग्यता, कार्यस्य चेतरैरिति योग्यतां नियमयति, तेनापि गुणद्रव्यकारकत्वादीनां परस्परान्वययोग्यता प्रत्यक्षावगता न निराकर्तव्या। सत्यम्, आर्थी सा योग्यता। शाब्दी तु कार्येतरपदार्थानामेवेति चेद्, न, कार्यपदार्थेन गुणद्रव्यकारकत्वादीनां साक्षादन्वयायोग्यत्वात्। भावार्थेन हि कार्यस्यान्वयः। कारकं तु भावार्थस्येति नियमात्। अथ कार्येण सर्वपदार्थानां शेषशेषि(का ? ता)लक्षणोऽन्वयोऽव्यवहितः, क्रियाकारकलक्षणस्तु व्यवहित इति मतम्। केयं शेषशेषिता। न तावद् भृत्यस्वामिता, चेतनविषयत्वात्। तदुपाधिकर्तव्यता तच्छेषतेति चेद्, न, जातिगुणद्रव्याणां कर्तव्यतायोगात्, सिद्धरूपत्वात्। न च गुणगुण्यादिवद् आश्रयाश्रयिभावः शेषशेषिता। अथोपकार्योपकारक[1]भावो भावार्थ एव, तर्हीतरपदार्थानां शेषी। गर्भदासोऽपि स्वामिनोपक्रियमाणः शेषी। भृत्यत्वेन तु सम्बन्धान्तरेण गुणभूतः। अथ प्राधान्यं शेषिता, किं शब्दतोऽर्थतो वा। शब्दतश्चेद्, दध्न एव प्राधान्यात् तदन्वित[2]होमकर्तव्यता[3]यां शब्दसम्बन्ध[4]ः स्यात्। अर्थतश्चेद्, अचेतनस्योपकार्यतैव प्राधान्यं तच्चाव्यवधानेन भावार्थस्य व्यवधानेन सुखस्य दुःखनिवृत्तेर्वेति न कार्यान्वययोग्यतानियमः। अतो यथाप्रमाणान्तरसिद्धयोग्यतानुसारमेव पदानां योग्यान्विते सामर्थ्यमिति रमणीयम्॥ ५०॥

---

१. 'कता भावा' ख. ग. पाठः. २. 'ते', ३. 'ता श', ४. 'न्धात्' क. पाठः.

किञ्च—

भूतार्थबुद्धिर्नामानन्याध्याहारो न चानुमा ।
कल्पनागौरवात् कार्यदृष्ट्या तच्छक्तिरिष्यताम् ॥ ५१ ॥

न तावल्लौकिकी भूतार्थबुद्धिः शब्दनिबन्धना न प्रमाणं, प्रत्यक्षादिव शब्दाद् भूतार्थं प्रतिपद्य प्रमाणान्तरेणोपकारापकारहेतुतां चानुस्मृत्यार्थाविसंवादिव्यवहारात् । अथ तत्रापि कार्यमध्याह्रियते, न तावदर्थसमवायिनः कार्यस्याध्याहारः । प्रतिपत्तुः तत्र प्रवृत्तिनिवृत्त्योरभिप्रायापरिज्ञानात् । नापि ज्ञातव्य इत्यध्याहारः । यतो देवदत्तो निर्गत इति ज्ञातव्य इत्यत्र देवदत्तनिर्गमनपदार्थस्वरूपे तत्संसर्गे वा पदाभ्यामेव ज्ञानोत्पत्तौ निष्पन्नविषयकार्यायोगाद् न योग्यतालक्षणः पदसमन्वयः स्यात् । अनुत्पन्ने तु विहिते च ज्ञाने न देवदत्तनिर्गमनज्ञानोत्पादः, पदयोस्तत्रानुत्पादकत्वात् । विधिपदस्य च देवदत्तनिर्गमनज्ञानकर्तव्यतायां ज्ञानहेतुत्वात् । विधेयस्य च ज्ञानस्य विधिविषयज्ञानस्य च भिन्नत्वात् । तस्माज् ज्ञातव्य इत्यध्याहारे भूतप्रमितिलोपः प्रसज्येत । किञ्च, सम्बन्धज्ञाने कार्यमित्यधिकं प्रयोजकं कल्पयित्वा लोकेऽपि प्रतिवाक्यमप्रतीतस्य पदस्याध्याहारकल्पनाद् वरमन्विते सामर्थ्यकल्पनम् । अथ लौकिकी भूतार्थप्रमितिर्न शाब्दी । किन्त्वनुमाननिबन्धनेति, न, तत्राप्यन्वयव्यतिरेकवच्छब्दपरित्यागे कल्पनागौरवात् । न च कार्यसंसृष्टसमर्थेभ्यः

---

१. 'त्रान्व' ख. पाठः.

शब्देभ्यो भूतार्थसंसर्गानुमानसिद्धिः । न चासौ संसर्गभ्रमः, प्रत्यक्षवद् व्यवहाराविसंवादाद् अबाधात् । अन्यान्विते च शाब्दकार्यदर्शनात् तावन्मात्रे सामर्थ्यं कल्प्यते, कार्यगम्यत्वात् सामर्थ्यस्य । ननु तावन्मात्रे शक्तिग्रहणाभावे कथं तत्र कार्यदर्शनम् । नैष दोषः, अन्यान्वितमपि सम्बन्धज्ञानसमये कार्यान्वयान्तर्वर्तितया वर्तते । कार्यदर्शनात् तु तावन्मात्रे सामर्थ्यं नियम्यते । नन्वनवधारिते प्रयोजके कथं कार्योत्पादः, न, प्रयोजकान्तरं कल्पयतोऽपि कार्यवाक्याद् बुद्धिकार्यदर्शनात् । सम्बन्धज्ञानसमये कार्यस्यापि विद्यमानत्वाद् बुद्धिकार्योपपत्तिरन्यान्वितपक्षेऽपि समाना । तस्माद् न कार्यान्विते सामर्थ्यं, किन्त्वन्यान्वित इति सिद्धम् ॥ ५१ ॥

अङ्गीकृत्य लिङादिशब्दानां कार्याभिधायित्वं प्रयोजकोपादानसामर्थ्यादन्यान्विते सामर्थ्यमित्युक्तम् । इदानीं तदेव नास्तीति प्रतिपादयितुमाह —

**विशिष्टव्यवहारस्य हेतुर्नान्यो निदर्शने ।**
**इष्टाभ्युपायात् कार्यत्वं ह्यन्यथासिद्धबोधनम् ॥ ५२ ॥**

व्युत्पत्स्यमानेन यत् स्वात्मनि प्रवृत्तिनिमित्तं समधिगतं, तदेव प्रतिपत्तुरपि प्रवृत्तिनिमित्तमनुमीयते । तच्च नेष्टसाधनज्ञानादन्यत् समधिगतम् । ननु फलज्ञानादपि प्रवर्तते । सत्यम्, इच्छालक्षणैव तन्निमित्ता प्रवृत्तिः, न विशिष्टस्वरूपा शरीरादिव्यापारात्मिका । सा हि प्रवर्तकानुमानबीजं परे-

१. 'पेयं का' क. पाठ..

षामुपलब्धिगोचरत्वात् । सा चेत्थंभूताभिलषितसाधनज्ञाननिमित्तैव । कदाचित् साधनसामान्यज्ञानात् तद्विशेषजिज्ञासया प्रवर्तमानोऽपि तत एव प्रवर्तते, न फलमात्रज्ञानात्। ननु इष्टसाधनमप्यतीतादिभावेन गम्यमानं न प्रवर्तयति । सत्यम् । तस्य कालसम्बन्धज्ञानं प्रवृत्तिप्रतिबन्धकम्। ननु सिद्धे हेतुत्वे प्रतिबन्धकत्वकल्पना[२] । सत्यं, कालसम्बन्धज्ञानविकले कर्तुरभिलषितसाधनेऽवगते प्रवृत्तेरनवगते च तस्मिन्नप्रवृत्तेरन्वयव्यतिरेकज्ञानद्वयानुपपत्तिप्रभवया[३]ऽर्थापत्त्याधिगतमेव तस्य प्रवृत्तिहेतुत्वम् । ननु सत्यपि तस्मिन् अशक्तो न प्रवर्तते। सत्यम् । कर्तृसामर्थ्यादिसाधनपौष्कल्ये सति यतो विषयविशेषज्ञानात् प्रवर्तते, तदेव प्रवृत्तिहेतुतया शब्दाभिधेयमिति कार्यवादिनाप्यङ्गीकर्तव्यं, तत्रैव शब्दसापेक्षतानियमात् । नन्वेवमपि कर्तुरभिलषितस्य साधनं कालविविक्तं कृतियोग्यतया कार्यमवगम्यमानं प्रवर्तयतीत्युक्तं भवति । तत्र कार्यतैव प्रवृत्तिहेतुः किं न स्यात् । फले प्रवृत्तिव्यभिचारादिति वदामः । तदपि हि सुखं दुःखनिवृत्तिर्वा साक्षाद् व्यधानेन वा[४] कृतियोग्यतया कार्यमित्यवगम्यते । न तत्र विशिष्टप्रवृत्तिरिच्छालक्षणैवेत्युक्तम् । तर्हि हितसाधनगतं कार्यत्वमेव प्रवृत्तिहेतुः । तन्न । विशेषणायोगात् । ननु हितसाधनमप्यतीतादौ न प्रवर्तयतीति कृतियोग्यताप्यवश्यापेक्षणीया । न । परिनिष्पन्नपदार्थांशज्ञानस्यापि साक्षाद् वा पर-

१. 'विशिष्ट' ख. ग. पाठः. २. 'न्धकल्प' ख. ग. पाठः. ३. 'वा' ख. ग. पाठः. ४. 'च' ग. पाठः.

म्परया वाभिलषितसाधनविषयस्य पदार्थांशे प्रवृत्तिहेतुत्वात्। किन्तु कारणसामर्थ्यवद् विषयस्य कृतियोग्यतापि प्रवृत्तावुपसर्जनत्वेनापेक्ष्यते। प्राधान्यं तु हितसाधनस्यैव, सत्यपि कृतियोग्यत्वे हितसाधनताभावे विशिष्टप्रवृत्त्यदर्शनात्[१]। ननु कार्यस्याप्यन्वयव्यतिरेकयोस्तुल्यत्वात् कार्यमेव प्रधानमिति किं न भवेत्[२]। न, कालोपबन्धलक्षणप्रतिबन्धनिरास[३]कत्वेनापि कृतियोग्यताया अन्वयव्यतिरेकयोरन्यथासिद्ध्युपपत्तेः। ननु प्रतिबन्धनिरास[४](क)त्वकल्पनाद्[५] वरं हेतुत्वकल्पनम्। तन्न, सति ह्येकस्मिन् कारणेऽनन्यथासिद्धान्वयव्यतिरेकाभ्यां कारणान्तरं कल्प्यते। तौ चान्यथासिद्धावित्युक्तम्। ननु कालोपबन्धः प्रतिबन्धः, किं[६] वा कारणाभावः। प्रतिबन्ध(क?) एव, क्लृप्तकारणे हितसाधनत्वे तत्रापि विद्यमाने प्रवृत्तिकार्यविरोधित्वादक्लृप्तत्वाच्च कार्यतायाः। नन्वेवं सर्वत्र सहकारिकारण[७]लोपः स्यात्। न स्यात्। यत्र कार्यविरोधिभावान्तरव्युदासेन यस्यान्वयः, तत्र प्रतिबन्धनिरासेनैव तस्यान्वयः। यत्र[८] तु स्वभावमात्रव्युदासेनान्वयव्यतिरेकाभ्यां यस्य कार्यान्वयः, तस्य तत्र कारणत्वेनै[९]वान्वयः। इह तु कालोपबन्धनज्ञानं प्रवृत्तिविरोधि भावान्तरम्। तच्च व्युदस्यते कार्यताज्ञाने[१०]न। न च कुलालादेर्विरोधिपिण्डान्तरनिरासेनैवान्वयः, किन्तु कारणत्वेनैव। क्वचिन्निवृत्तेऽपि तस्मिन् घटा-

१. 'श्च' ख. ग. पाठः. २. 'त् (फले ?) न' ख. पाठः. ३. 'सत्वे' ख. ग. पाठः. ४. 'सकल्प क. पाठः. ५. 'द्वारं' ग. पाठः. ६. 'किं का' ख. ग. पाठः. ७. 'णोपादानलो' क. पाठः. ८. 'स्य' ख. ग. पाठः. ९. 'नान्व', १०. 'ने। न च' क. पाठः.

नुत्पत्तेः । इह तु हितसाधनज्ञानं कालविविक्तं सति कारण-सामर्थ्ये प्रवृत्तिं प्रसूत एव । ननु कार्यतैव प्रवृत्तिहेतुः । तस्याः फलोपरागः प्रवृत्तिप्रतिबन्धकः । तन्निरासोऽभिमतसाधनतेति किं न कल्प्यते । दुःखतत्साधनयोः कृत्या निष्पत्तियोग्ययोरपि हितसाधनताभावे प्रवृत्त्यदर्शनात् । अथ तयोरपि [1]प्रवृत्तिप्रतिबन्धकता । न । उभयशून्येऽपि वस्तुमात्रे निष्पादनयोग्येऽपि प्रवृत्त्यदर्शनात् । अथ तदपि प्रवृत्तिविषयतया किञ्चिद् दुःखक[2]रत्वात् [3]प्रवृत्तिप्रतिबन्धकम् । न । तस्मिन्नेवाभिलषितसाधनभावेऽवगते पश्चात् प्रवृत्तेः । अथ सर्वत्र हितसाधनताभावज्ञानं प्रवृत्तिप्रतिबन्धकम् । न । योग्यानुपलब्ध्यभावेऽभावनिश्चयाभावाद् निष्पादनयोग्ये वस्तु[4]मात्रस्वरूपे प्रवृत्तिः स्यात् । अथ न निष्पादनयोग्यता कार्यता, किन्तु बुद्धिपूर्वकारिणः कृत्युपक्षेपयोग्यता । सा च हिते तत्साधने वा । नान्यत्र । अतः फलमेव प्रवृत्तिप्रतिबन्धकम् । तत्साधन[5]ता तु तन्निरास इति । तर्हि बुद्धिपूर्वकारिणः कृत्युपक्षेपयोग्यता विषयसमवायिनी निष्पादनयोग्यतामात्रव्यतिरिक्ताभिलषितता तत्साधनता वा नान्यद्, अनिरूपणात् । प्रवृत्त्यभावविरोधितेति चेद्, न, प्रवृत्तेरेव प्रवर्तकत्वप्रसङ्गात् । प्रवर्तकत्वे सति प्रवृत्त्यभावविरोधितेति चेत् । राग एव तर्हि सा । कर्तव्यता तु विषयसमवायिनीति हितादिरेव वा प्रवृत्त्यभावविरोधी । तत्र हितस्य विशिष्टप्रवृत्तिहेतुत्वाभावाद्धित-

---

१. 'प्रति' क. पाठः. २. 'कारणत्वा', ३. 'प्रति' ख. ग. पाठः. ४. 'स्तुस्व', ५. 'ता त' क. पाठः.

साधनमेव प्रवृत्तिहेतुः शब्दान्तरेणाभिधीयत इति न पक्षान्तरमेतत् । वयं तु हितसाधनस्यैव निष्पादनयोग्यता प्रवृत्तौ प्रतिबन्धनिरासेनोपकरणत्वेन वापेक्ष्यत इत्येतावद् ब्रूमः । ननु साधनसाधनेऽपि तद्विषयज्ञानात् प्रवर्तते । सत्यम् । साधनस्य परम्परया[1] हितत्वमङ्गीकृत्य तत्साधनेऽपि ततः प्रवर्तते । तदेच्छालक्षणैव साक्षात्साधने प्रवृत्तिः । विशिष्टा तु पुनः साधनसाधने । एवंच[2] सति प्रयाजाद्यङ्गविधयः क्रतोरेव हितत्वमङ्गीकृत्य तत्साधनतामेव विदधति । भवतु वा हितसाधनगता कार्यता प्रवृत्तिहेतुः । तथापि न कार्यता शब्दार्थः । तथाहि — प्रतिपत्तुः प्रवृत्तिलिङ्गेनेष्टसाधनगतकार्यतावगमेऽनुमिते निष्पत्तियोग्यतालक्षणकार्यांशबुद्धेः प्रकृत्यर्थक्रियास्वरूपमात्रावगमादेवानुमानेन सिद्धेस्तत्र हितसाधनतांशे लिङादिप्रत्ययस्य सामर्थ्यं कल्प्यते । अन्यथासिद्धस्य शब्दार्थतानुपपत्तेः । न च गवानयनस्य तदानीमन्वयव्यतिरेकाभ्यां हितसाधनतावगमः, फलप्रसवादर्शनात् । नाप्यनुमानमानेन गवानयनस्याभिमतसाधनता, व्यभिचारात् । क्रियास्वरूपस्य कालोपबन्धविकलस्य निष्पादनयोग्यताव्यभिचाराभावाच्च । तस्मात् कर्तुरभिलषितसाधनमेव प्रवृत्तिहेतुतया लिङादिप्रत्ययार्थ इतिस्थितम् ॥ ५२ ॥

अत्र कश्चिदाह — किं गवानयनं स्वरूपेण कर्तुरभिलषितसाधनं किं वाज्ञप्तत्वात् । स्वरूपेण चेद्, गवानयन-

---

१. 'याभिहि', २. 'च प्र' ख. ग. पाठः.

मनुस्मरन् पूर्वसिद्धगवानयनदृष्टहितसाधनतानुमानेन स्वयमेव प्रवर्तेत। आज्ञप्तत्वाच्चेद्, वेदे न प्रकृत्यर्थस्य हितसाधनतासिद्धिः, आज्ञप्तताभावात्। तदभावश्चापौरुषेयत्वाद् वेदस्येति। तत्राह—

**साधनत्वं स्वतः सिद्धं[1] विशेषस्ये तु कार्यवत्।**
**प्रधानाभिमतं[3]द्वारं प्रयोक्तापि विवक्ष्यते॥५३॥**

अत्र भवानपि चोदनीयः—किं गवानयनं स्वरूपेण कार्यं, किं वाज्ञप्ततयेति। स्वरूपेण चेत्, पक्षान्तरवद् गवानयनान्तरसिद्धं कार्यमनुस्मृत्य स्वयमेवानुतिष्ठेत्। कार्यार्थस्य प्रमाणान्तरायोग्यत्वात् ततोऽप्रतिपत्तेर्न शब्दमन्तरेण प्रवृत्तिरिति चेत्, तत्र प्रयोक्तुः प्रयोगश्च न स्यात्। अत एव प्रवृत्तिरपि श्रोतुर्न स्यात्, अप्रयुक्ताच्छब्दादर्थानधिगमात्। आज्ञप्ततया चेद्, वेदे कार्योपरागाभावादाज्ञप्ततयैव च कार्यतासिद्धेर्न तत्र शब्दसामर्थ्यकल्पना। नाज्ञोपरागात् कार्यता, अध्येषणादौ वेदे चाभावप्रसङ्गात्। अथ प्रवर्तकमात्रोपरागः कार्योपरागः। स च स्वतो वा प्रेषणाध्येषणाभ्यनुज्ञानिबन्धनो वा। उभयथाप्युक्तो दोषः। अथ बालस्य स्वप्रवृत्तौ गवानयनं न स्वरूपेण कार्यम्। किं तु अभिलषितसमर्थनोपाधावेव प्रयोगाविषयमपि गवानयनमात्मनोऽभिलषितं समर्थयत् कार्यं भवति। तच्चाभिलषितं प्रैषादिकर्तुरभिलषितसमर्थनद्वारेण कर्तुरपि समर्थ्यते। अतो गवानयनविशेष

१. 'द्धं सवि', २. 'स्य का', ३. 'तं' क. पाठः. ४. 'षः, आज्ञ', ५. 'यगवानयनम' क. पाठः.

एव कर्तुरर्थतः कार्येणोपरज्यते । तच्च[1] शब्दादेवावगम्यते । गवानयनमात्रस्य कर्तुरभिलषितसमर्थनस्य व्यभिचारादनुमानेन कार्यतायाः प्रतिपत्तुमशक्यत्वात्, प्रवृत्तिद्वारेण तस्य कार्योपरागज्ञा(ना)योगादिति । तर्हि तस्यैव तथाविधं हितसाधनत्वमुपदेशादेवावगम्यताम् । तस्य च गवानयन[3]विशेषस्य स[2]द्वारं हितसाधनत्वं कार्यत्वमिव कर्तुः स्वरूपप्रयुक्तमेव कल्प्यतां, तथावि[5]धफललक्षिते विशेषिते वा साधने लिङादिशब्दप्रयोग इति । यथा कर्तुः कृतिविशेषिते तदुपलक्षिते वा कार्ये लिङादिप्रयोगः, यथा वा पुरोवर्तित्वविशिष्टे तदुपलक्षिते वा घटादाविदंशब्दप्रयोगः । ननु प्रयोक्ता स्वात्मनोऽभिलषितसाधनं गवानयनं विवक्षति, न[6] तु कर्तुरभिलषितसाधनं, तत्र कथं कर्तुरभिलषितसाधने शब्दप्रयोगः । अप्रयुक्ते च कथं तत्र सम्बन्धज्ञानम् । नै[8]वैतच्चोद्यं, कार्येऽपि तुल्यत्वात् । प्रयोक्ता हि स्वात्मनः कर्तव्यं प्रतिपद्य परेण साधयितुं वचः प्रयुङ्क्ते । न[7] प्रयोज्यस्य कर्तव्यं विवक्षित्वा[9] प्रयुङ्क्ते । तत्र कथं नियोज्यस्य कार्ये शब्दसामर्थ्यं, नह्यन्यकार्यादन्यः प्रवर्तते । ननूपदेशे प्रयोज्यकर्तव्यतैव विवक्ष्यते । हितसाधनतापि तथा प्रयोज्यं प्रत्येवोपदेशे विवक्ष्यते । अथ प्रैषादिष्वपि प्रयोक्ता स्वकर्तव्यनिर्वर्तनं प्रयोज्यस्यापि कर्तव्यमिति वि-

---

१. 'च्छब्दा', २. 'त् तद्वारे' ख. ग. पाठः. ३. 'नस्य', ४. 'तद्वा', ५. 'धि' ख. पाठः. ६. 'न क' ख. ग. पाठः. ७. 'न त' क. पाठः. ८. 'न च क', ९. 'त्वा । त' ख. ग. पाठः.

वक्षति । तर्हि स्वाभिमतनिर्वर्तनं प्रयोज्यस्याभिमतं निर्वर्तयतीति परम्परया कर्तुरभिलषितसाधनं विवक्ष्यत एव प्रयोक्त्रा । तस्माद् यथा पराभिमतकार्येऽपि प्रयोज्यप्रवृत्तिदर्शनात् तस्य स्वकर्तव्यताज्ञानमेवानुमाय तत्र सम्बन्धो गृह्यते, स्वकार्यज्ञानादेव प्रवृत्तेः । तथाभिलषितसाधनज्ञानेऽपीति न विशेषं पश्यामः । ननु जातस्य जन्तोराद्या करचरणविन्यासादिप्रवृत्तिर्न हितसाधनज्ञानात् । तस्य फलप्रसवोन्नेयत्वात् । ननु कार्यज्ञानं वा कुतो जायते । न तावत् प्रत्यक्षेणेति वक्ष्यते । सम्बन्धज्ञानाभावाद् नानुमानादिना । अथाबुद्धिपूर्वा सा प्रवृत्तिरिति हेतुर्न मृग्यते । इतरस्यापि तत् तुल्यम् । अथ जन्मान्तरीयकार्यज्ञानसंस्कारात् सा जायते । तथाविधादेवाभिलषितसाधनज्ञानसंस्कारात् सा किं न स्यात् । तस्मात् तत एव प्रवृत्तिरिति सिद्धम् ॥ ५३ ॥

ननु किमिदं हितसाधनत्वं नाम, किं वस्तुस्वरूपमात्रं तद्धर्मो वा । न स्वरूपमात्रं, प्रत्यक्षगम्यत्वात् । तस्य साधनतायाश्च तथानवगमात् । न धर्मः । तत्सद्भावे प्रमाणाभावादिति । तत्राह —

**अन्वयव्यतिरेकाभ्यां पदार्थातिशये प्रमा ।**
**जायतेऽन्यप्रयुक्तेषु व्यवहारोऽन्यथा कथम् ॥ ५४ ॥**

अविशिष्टेऽपि पदार्थस्वरूपे फलप्रसवान्यथानुपपत्त्या कश्चित् तत्साधनसामर्थ्यातिशयः कल्प्यते । ननु प्रवृत्तिविषयतामापन्नात् फलप्रसवो न स्वभावसिद्धात्, फलप्रसवोन्नीतसाधनाच्च प्रवृत्तिरितीतरेतराश्रयता । न । परप्रवृत्तिविषयी-

कृतपदार्थप्रसूतफलदर्शनादपि तत्साधनतावगमात् । अन्यथा कथमभिलषितफलाय कस्यचिदेवोपादानलक्षणो व्यवहारः । तस्मादस्त्येवासावतिशयः । ननु प्रैषादिष्वभिप्रायभेदेषु निरूपितसम्बन्धा लिङादयः कथं हितसाधनतामभिदध्युः । न । उपदेशे तदभिधानदर्शनात् । ननु तत्राप्यनुग्रहोऽभिधेयः । न । तदभावेऽप्यदृष्टभयादुपदेशात् तत्र हितसाधनत्वमेव विवक्ष्यते । प्रैषादिष्वपि परम्परया तद्विवक्षा दर्शिता । प्रवृत्तिहेतौ च सम्बन्धज्ञानादाज्ञामात्रादप्रवृत्तेः स एव शब्दार्थो नाज्ञादिः । तेषु सम्बन्धज्ञानाभावात् । बालस्य दृष्टान्ताभावाद् वक्तृप्रतिपत्त्रोरुत्कर्षापकर्षसुखविकारादिलिङ्गानुमेयतयान्यथासिद्धत्वाच्चाज्ञादीनाम् ॥ ५४ ॥

किञ्च

**रागात् प्रवृत्तेरिष्टादेस्तद्धेतुत्वान्न कार्यता ।**
**प्रवृत्तिहेतू रागश्चेन्न शाब्दः साक्षिसिद्धितः ॥ ५५ ॥**

ननु रागस्य कार्यताज्ञानमेव हेतुः । न । सतीष्टादावुत्पत्तेरसति चानुत्पत्तेरिष्टादिरेव तन्निमित्तम् । नन्विष्टादेः कार्यज्ञानं ततो राग इति कारणकारणतया अन्यथासिद्धिरस्ति । तन्न । यदि कृतिविषयीकारयोग्यता कार्यता, सा प्रकृत्यर्थलक्षणक्रियास्वरूपज्ञानादेव कालसम्बन्धज्ञानविकला स्वनिष्पादितपूर्वसिद्धक्रियानिदर्शनानुमानेन सिध्यति, नेष्टसा-

१. 'वाति' ख. ग. पाठः.

धनताज्ञानमपेक्षते । यदि वा बुद्धिपूर्वकारिणः कृत्युपक्षेपयोग्यता कार्यता, तदेष्टता तत्साधनता वा सेतीष्टादेरेव राग इत्युक्तं भवति । यदि तृतीयमेव किञ्चित् कार्यबुद्ध्यालम्बनं कल्प्येत, तथापि हितादेरेव रागः कार्यताबुद्धिश्चेत्येककारणजन्यता तयोरिति न रागस्य हितादिः कारणकारणम् । निष्पन्नेऽपि कदलीफलादौ हितसाधने भक्षणविशेषणतया रागविषयीकाराद्, अन्यथा हितादिज्ञानाद् रागः । रागज्ञानाच्च कार्यताज्ञानमिति कल्पनायामप्यविशेषात् । ननु हितसाधनतावगमः कार्यताज्ञानाधीनः किं न स्यात् । कार्यतायां प्रमाणान्तराभावात् । साधनतायां तु फलप्रसवान्यथानुपपत्तिरुक्ता । फले त्वानुकूल्यं प्रत्यक्षसिद्धम् । यत्र च हिततत्साधनतावगमः, तत्रैव कार्यबुद्धिनियमात् तदेव तद्धेतुरिति कल्प्यते । अतः प्रतिपत्तुः प्रवृत्तिलिङ्गेन प्रवर्तकं रागमनुमाय तस्य च स्वसाक्षिकतया शब्दानपेक्षत्वात् तद्धेतौ हितसाधनताज्ञाने शब्दसामर्थ्यं कल्प्यत इति रमणीयम् ॥ ५५ ॥

किञ्चेदं कार्यबुद्धिरवलम्बत इति परीक्ष्यते—

**न नियोगं न निष्पाद्यं कृतिरक्तं न कार्यधीः ।**
**निरुपाधिकसाध्यं वा विविक्तं कालतोऽपि न ॥ ५६ ॥**

**आलम्बते न चापूर्वं न प्रधानं कृतिं प्रति ।**
**प्रवर्तकत्वान्नाभावविरोधि व्यभिचारतः ॥ ५७ ॥**

व्यभिचारत इति सर्वत्र सम्बध्यते । न तावत् कार्यबुद्धिर्नियोगमवलम्बते । नियोगो हि नाम चेतनस्य प्रधान-

स्याप्रधानं[1] चेतनं प्रति प्रवर्तनालक्षणोऽभिप्रायभेदः प्रसिद्धः। स च बालस्य स्वतन्त्रप्रवृत्तौ । वेदे च कार्यबुद्धिं व्यभिचरति । तथाविधपुरुषसम्बन्धे[2]ज्ञानाभावात् । नापि कृतिविषयीकारयोग्यतामात्रमवलम्बते । तस्याः कार्यबुद्धिगोचरेऽपि दुःखादौ विद्यमानत्वाद् व्यभिचारात्। नापि वर्तमानकृतिसंसृष्टमर्थमवलम्बते । कार्यबुद्ध्यधीनत्वात् कृत्युत्पत्तेः, कार्यबुद्धिसमये कृतिसंसर्गस्य[3] व्यभिचारात्। न च निरुपाधिकसाध्यं कार्यम् । सुखादेरेव तदभावात् , सोपाधिकसाध्येऽपि साधने कार्यबुद्धिदर्शनाच्च । न च सुखदुःखनिवृत्तिव्यतिरेकेण निरुपाधि(क)साध्यं नाम किञ्चिदस्ति । अथ कालविविक्तं कार्यबुद्धिरालम्बते । किं शब्दतोऽर्थतो वा कालविवेकः । शब्दतश्चेद् , घटादिश्रुतयोऽपि न कालसम्बन्धिनमर्थमभिदधतीति तदुत्पन्नबुद्धीनामपि कार्यबुद्धित्वप्रसङ्गः । अर्थतश्चेत् , शशविषाणबुद्धेरपि तत्प्रसङ्गः । तदेव हि तुच्छं यन्नाभूदस्ति भविष्यति । ननु कार्यमित्युक्ते कालसम्बन्धो न प्रतीयते, तथापि न तुच्छतावगतिः । सत्यम् । शब्दतः कालसम्बन्धानवगमो घटादिश्रुतिजन्यप्रतीतावपि तुल्य इत्युक्तम् । अर्थतः कालविवेकः केनावगम्यते। न कार्यबुद्ध्यैव, तस्यास्तावन्मात्रनिष्ठत्वात् । अथ सैव कालशून्यतामपि प्रतिपादयेत्, कस्येति न जानीमः । कार्यस्येति चेद् , न । तस्यैव निरूप्यमाणत्वात् । कालविविक्तोऽर्थः स इति चेत्। तर्हि तादृशोऽर्थः कालस्तुच्छं

---

१. 'न', २. 'न्धाभा' ख. ग. पाठः. ३. 'र्गस्य' क. पाठः. ४. 'त् । न' ख. ग. पाठः. ५. 'संसृष्टम' क. पाठः.

वेति[1] कुतस्तुच्छताविवेकः । कार्यस्य च तुच्छवैलक्षण्यमिच्छता प्रतीतितोऽभावेऽप्यर्थतः कालसम्बन्धो वक्तव्यः । घटादिष्विव कालसम्बन्धानुमानात् । अपूर्वमपि लौकिककार्यबुद्धिव्यभिचाराद् न तदालम्बनम् । न च वेदेऽपि तत्सम्भवः । मानाभावात् । स्वर्गकामिनो यागकर्तव्यतान्यथानुपपत्तिरिति चेत् । सैव हि कर्तव्यता न निर्ज्ञायते । न नियोगादिरिति चोक्तम् । स्वर्गसाधनता चेत् कानुपपत्तिः । अपूर्वमन्तरेण क्षणप्रध्वंसिनो यागस्य कालान्तरवर्तिफलसाधनतानुपपन्ना । न तर्ह्यपूर्वमात्रेण तदुपपत्तिः, विशिष्टशरीरेन्द्रियाभावात् । तदप्यपेक्षितं लोकसिद्धानुमानेन गम्यताम् । तर्हि यागस्य[2] स्वर्गसाधनत्वमपेक्षितार्थोपसंहारेऽपि न विरुध्यते चेत् , श्रुतिस्मृतिशतसन्दृब्धादेवेश्वरात[3] तदवगतिगोचरैर्निर्वृत्तकर्मापेक्षया फलसिद्धेर्नापूर्वकल्पनावकाशः । नापि तस्य शब्दाभिधेयता । शब्दार्थानुपपत्तिगम्यत्वादगृहीतसम्बन्धत्वाच्च । न च तत्रैव सम्बन्धग्रहः । लिङाद्यभिधेयप्रकृत्यर्थकर्तव्यताद्वारेण तत्साधनद्वारेणैव[4] वापूर्वकल्पनादेकस्मिन् प्रयोगे क्रमेणावगम्याभिधेयद्वयकल्पनायोगात् । न च लिङादिस्वरूपमात्रस्य पदान्तराभिधेयार्थस्य चापूर्वमन्तरेणानुपपत्तिः[5] । अभिधेयान्तराभावादनुपपत्त्यभावाच्च । तस्माद् वेदे नापूर्वं तदभिधानं वा कल्पनीयम् । अथ कृतिं प्रति प्रधानं कार्यम् । किं तत् प्राधान्यम् । बुद्धिपूर्वकारिणः कृत्युपक्षेपयोग्यता, तर्हि[6] सुखदुःख-

१. 'त्ति', २. 'स्य सा', ३. 'द्दा', ४. 'रं' ख. ग. पाठः, ५. 'माव', ६. 'वा' क. पाठः.

निवृत्तिस्तत्साधनं वा कार्यमिति नैमित्तिकादौ[1] कर्मणि कार्यबुद्धिव्यभिचारः। न च प्रवर्तकत्वमात्रम्। रागे कार्यबुद्ध्यभावात्। प्रैपादेरिष्टादेश्च वेदे व्यभिचारः प्रसिद्धः। प्रवृत्त्यभावविरोधी च रागो वा प्रवृत्तिर्वा हितादिर्वा, नान्यदित्युक्तम्। ननु कार्यबुद्धिसामर्थ्यादेवावलम्बनं कल्प्यताम्। सत्यम्। नान्यदे[2]तः कल्प्यते कृतिविषययोग्यतामात्र[3]ऽव्ययवार्थं सम्भवति। ननु कार्यमित्युक्ते प्रवर्तकरूपमपि किञ्चिदन्त[4]र्गर्भितं प्रतीयते। सत्यम। विषयस्य कृत्युपक्षेपयोग्यतालक्षणं हितसाधनत्वमेव तत। ननु कार्यबुद्धौ हितसाधनतां न प्रतीयते। नैवम्। प्रवर्तकबुद्धौ तदप्यन्तर्गर्भितं प्रतीयते। अथवा हितादेः कृतिनिष्पाद्यतायाश्च विलक्षणस्यालम्बनस्यानिरूपणात्, हितसाधनतालम्बनः प्रवर्तकरूपः कार्यमित्यभिनिवेशो राग एव ममेदं भूयादितिवद् न प्रमाणम। प्रमाणत्वभावाच्च[6]॥ ५६ ॥ ५७ ॥

कथं,

**नाक्षमापानतोऽभावान्नानः शब्दानुमे प्रमा।**
**नार्थापत्तिरतो रागः कार्यमित्येव न प्रमा ॥ ५८ ॥**

न तावत् परस्य पराश्रये गवानयनादिस्वरूपे घटादौ वा प्रत्यक्षे तत्कार्यतापि प्रत्यक्षेणावसीयते, वर्तमानत्वात्। गवानयनादेस्तत्र कार्यत्वाभावाद् अनध्यक्षतेति चेद्, अवर्तमाने तर्हि गवानयनादौ तद्व्यपाश्रयस्य कार्यार्थस्य सुतरां न प्रत्यक्षता। नापि स्वातन्त्र्येण, अनवगमात्। ननु न गम-

१. 'दौ च क', २. 'त् क' ३. 'ादेवाव', ४. 'हिंतं' ख. ग. पाठः. ५. 'ता प्र' क. पाठः. ६. 'च ना', ७. 'ष' ख. ग. पाठः.

नादिक्रिया प्रत्यक्षा । अनुमेया तु । केन लिङ्गेन, व्यवस्थितस्य द्रव्यस्य कादाचित्कसंयोगविभागाभ्याम् । तथाहि—संयोगविभागजन्यं कार्यं कादाचित्कं स्वाश्रयसंयोगविभागलक्षणातिशयपुरस्सरं दृष्टम् । तथा संयोगविभागावपि कादाचित्कौ स्वाश्रयातिशयपुरस्सरौ । योऽसावतिशयः संयोगविभागहेतुः सा क्रियेति । नैतत् सारम् । या सा क्रिया सा स्वाश्रये कादाचि(त्का ? त्की) वा न वा, न चेत् , संयोगविभागनित्यतापत्तेः कादाचित्कत्वादिति हेतोरसिद्धताप्रसङ्गः । कादाचित्की चेत् सापि स्वाश्रयातिशयपुरस्सरा वा न वा । न चेदनैकान्तिकस्तत्र हेतुः । अतिशयपुरस्सरा चेदनवस्थानात् संयोगविभागलक्षणधर्म्यसिद्धिप्रसङ्गः । अनादित्वात् परम्परया नासिद्धिरिति चेद् , न । अद्य जातस्य प्रथमक्रियोत्पत्तेः स्वाश्रयातिशयान्तरायोगात् तत्रानैकान्तिकत्वात् । अत एव न पराश्रया क्रियापि तत्संयोगविभागाभ्यां सिध्यति । किञ्च सतोरपि श्येनस्थाणुसंयोगविभागयोर्न स्थाणुः क्रियावानिति हेतोरनैकान्तिकता । स्वदेशसंयोगविभागौ देशिनः क्रियानुमानहेतुरिति चेत् । न । बलवदवधृतशरीरेषु मत्स्यादिषु स्रोतसि स्वदेशसंयोगविभागयोः सतोरपि क्रियाज्ञानाभावात् । किञ्च शब्दविद्युतोरिव क्षणिकत्वेऽपि चलतीति वर्तमानप्रत्ययाद् न फलेनातिवृत्तक्रियानुमानमेतदिति युज्यते । तस्मात् प्रत्यक्षैव क्रिया । अतः प्रत्यक्षक्रियाश्रयः स्वतन्त्रो वा न प्रत्यक्षगम्यः कार्यार्थः । अत एव

१. 'त्र स' ग. पाठः.

सम्बन्धज्ञानायोगान्न शब्दानुमानगम्यः । न च प्रवृत्तिविषयतान्यथानुपपत्तिस्तद्गतकार्यार्थाधिगमनी । विषयविशेषप्रवृत्तेः[1] फलप्रसवानुपपत्तिसिद्धाभिलषितसाधनविशेषनिबन्धनत्वसिद्धेरपूर्वपदार्थकल्पनायोगात् । अन्यथा फलानपेक्षायां कचित् प्रवृत्तिः कचिदप्रवृत्तिरिति न स्यात् । सत्यपि साधने फलाभिकाङ्क्षायां नियमाभावात् प्रवृत्त्यप्रवृत्ती युज्येते । ननु कार्यमपीच्छोपसंहारमुखेनैव प्रवर्तयतीति[2] युज्यते नियमः । न । तस्यानवगमे तदुपसंहारमुखेन प्रवर्तकत्वानवगमात् । फलं तु सुखं दुःखनिवृत्तिर्वा प्रत्यक्षमेव । तदाकारेच्छा नियमविकला[3] स्वानुभवसिद्धा । फलप्रसवान्यथानुपपत्त्या च तदनुकूलसाधनातिशयोऽप्यर्थापत्तिगम्यः[4] । हितसाधनज्ञानानन्तरं च तदाकारवतीच्छा स्वानुभवगम्या । तदेवं हितसाधनमिच्छोपसंहारमुखेन प्रवर्तयति । अथ फलसाधनतैव कार्यता, नास्ति विप्रतिपत्तिः । अथ फलेन कार्यमेव साधनतया कल्प्यते । न । प्रत्यक्षसिद्धपदार्थस्यैव साधनतासम्भवे पदार्थान्तरं साधनत्वं च कल्पयतः कल्पनागौरवात् । सिद्धघटादीनामप्यभिलषितक्रियासाधनत्वदर्शनात् । अत एव न कार्यत्वमेव साधनतेति न साधनतापह्नवः शक्यते कर्तुम् । अतो नार्थापत्त्या कार्यपदार्थावगमः । तस्मात् प्रमाणाभावात् प्रमेयाभावाच्च कार्यमितिप्रवर्तकाकारोऽभिनिवेशो राग एवेति सिद्धम् । अतो हितसाधनताभिधानमुखेन वेदेऽपि लिङादयः सन्निहितपदोपात्त-

---

१. 'त्ते', २. 'ते । न', ३. 'ल', ४. 'म्या' ख. ग. पाठः.

स्वर्गसाधनतामेव विशेषेणाभिदध्युः। नैमित्तिकादौ च कामश्रुतेरभावाद् निमित्तश्रुतेश्च नित्यान्वयात् कल्प्यमाननित्याभिलषित(प्रत्य)वायनिबर्हणसाधनत्वविशेषमेवाभिदध्युरिति श्लिष्यते॥ ५८॥

**अन्यथाकस्मिकार्थाः स्युर्वेदे कार्यार्थनिष्ठतः।**
**क्रियया न समन्वेति नियोज्यस्य विशेषणम्॥ ५९॥**

अप्रकल्प्यमाने शब्दस्य हितसाधनसामर्थ्ये वेदे कार्यार्थत्वमात्रनिष्ठत्वात् फलसाधनतानवगमादाकस्मिकसुखदुःखप्रयोजना एवोत्पत्त्यैव सर्वे प्राणिनः प्रसज्येरन्। ननु नियोगसामर्थ्यादेव धात्वर्थस्य फलसाधनतावगम्यते। न। अनाप्तनियोगे नैमित्तिकादौ च व्यभिचारात्। न चानाप्तवाक्याद् विषयनियोज्यव्यावृत्तनियोगप्रमितौ प्रमाणान्तरविरोधः। साध्यसाधनसम्बन्धविरोधस्तु न शाब्दीं नियोगप्रमितिं निरुणद्धि, अशाब्दत्वात्। आप्तनियोगे फलसाधनता स्यादिति चेत्। न। वेदे तदभावादपौरुषेयत्वात्। ननु कामिनः प्रवृत्त्युपदेशः कामोपायत्वे सति भवति। न। तत्साधनेऽपि फलकामनाया नियोज्यविशेषणत्वदर्शनात्। यथा ग्रा(मा?सा)दिकामेष्वनेकेषु द्वारं प्रत्यासन्नेषु कश्चिद् भोजयिता विज्ञातेनैव विशेषणेन नियोज्यं विशिनष्ट्यन्येषां निवृत्तये ग्रा(म?स)काम! आगच्छेति। न तत्रागमनं ग्रा(म?स)साधनम्। ननु न तत्र ग्रा(म?स)कामना-

1. 'ताप्तार' क. पाठः. 2. 'न्निति।', 3. 'त्। तस्याप्त' ख. ग. पाठः. 4. 'पाये भ', 5. 'न' क. पाठः.

निबन्धना प्रवृत्तिः, किं तु भोजनकामनानिमित्तेत्यतत्साधनता। सत्यम्। इतरत्रापि तत्तुल्यं, न स्वर्गकामनानिमित्ता प्रवृत्तिः। किं तु नियोगनिमित्ता। अथ काम्येषु कामनिबन्धना भावार्थेषु प्रवृत्तिरिति तस्य कामोपायता सिध्येत्। न। इतरेतराश्रयात्। कामनिमित्तप्रवृत्तिविषयत्वात् कामोपायतासिद्धिः, तदुपायत्वे च सिद्धे तन्निबन्धना तत्र प्रवृत्तिरिति। ननु स्वर्गादेः कामोपबन्धात् साध्यताप्रतीतेः साधनाकाङ्क्षायां धात्वर्थः साधनत्वेन सम्बध्यते। न। गमनादेरपि तत्साधनताप्रसङ्गात्। अविहितत्वान्नेति चेद्, विहितं सम्बध्यत इति कुतः। फलसाधनाकाङ्क्षत्वात्। न। नित्यत्वादौ च व्यभिचारात्। नन्वस्ति तत्रापि प्रत्यवायपरिहारः फलम्। इहापि तर्हि यत्किञ्चित् फलं कल्प्यताम्। ननु साध्यस्वर्गे सन्निहिते कुतः फलान्तरावकाशः। उच्यते। सति ह्यन्यस्मिन् प्रमितिहेतावाकाङ्क्षासन्निधिसंसर्गेतिकर्तव्यतामनुभवतो न स्वयमेव संसर्गं प्रमिमीते। नेह प्रमितिहेतुरस्ति। नियोगो हि स्वसिद्धिमात्रनिष्ठो न विषयफलसम्बन्धमन्तरेणानुपपन्नः। नियोगोऽपि विहितस्य फलमन्तरेणानुपपन्नः, अन्यथा तत्र प्रवृत्त्ययोगादिति चेत्, तर्हि सत्यपि विधावभिलषितसाधनावगमादेव प्रवृत्तेः, स एव शब्दार्थतया विधिरिति किमन्तर्गडुना नियोगेन। पुरुषाभिप्रायभेदत्वाच्च न तस्य वेदे सम्भव इत्युक्तम्। ननु

१. 'मिषावि' क. पाठः.

विषयनियोज्ययोरेकनियोगसम्बन्धसामर्थ्यात् परस्परसम्बन्धे सति नियोज्यविशेषणस्यापि स्वर्गस्य धात्वर्थेन सम्बन्धात् सम्बन्धस्य च गुणप्रधानभावमन्तरेणायोगात् स्वर्गः[1] साध्यत्वात् प्राधान्येनावतिष्ठते। कोऽयं नियोज्यो नाम। ममायं नियोग इति प्रतिपत्ता। तर्हि राज्ञोऽपि स्वनियोगे नियोज्यत्वप्रसङ्गः। कश्चायं ममायमिति सम्बन्धः। यदि कर्तृकरणीयता, तर्हि राज्ञोऽपि नियोज्यताप्रसङ्गः। न च स्वस्वामिसम्बन्धनिमित्तं क्रय[2]यादिलक्षणमत्र विद्यते। अथ विषयविषयिता सम्बन्धः। न। अभिप्रायभेदत्वाभावे विषयानपेक्षत्वात्। अथ कार्यार्थप्रतिपत्ता नियोज्यः। न। नियोक्तृ राज्ञोऽपि प्रसङ्गात्। अथोद्देश्यश्चेतनो नियोज्यः। न। उद्देशेन सम्बन्धानिरूपणात्। सत्यपि नियोज्ये स्वर्गकामना न तद्विशेषणं भवति, सम्भवे व्यभिचारे च विशेषणमर्थवत्। उच्यते— न तावद् दर्शपूर्णमासनियोगस्य पुरुषेणायोगो व्यवच्छिद्यते, विशेषणेन यावज्जीवश्रुतेरेव नियोगसिद्धेः। नाप्यन्ययोगव्यवच्छेदः। अस्वर्गकामिनोऽपि प्रदोषकालव्यावृत्तजीवने सत्यनुष्ठेयत्वात्। भवदपीदमुपलक्षणं भवेद्, न विशेषणम्। पुरुषस्यैव नियोज्यत्वात्, स्वर्गकामनाया नियोज्यत्वाभावात्। कार्यसम्बन्धासम्बन्धाभ्यां हि सम्बन्ध्यन्तरनियामकत्वाद् विशेषणोपलक्षणविभागः। अतो विषयनियोज्यसम्बन्धं कुर्वन्नपि नियोगः पुरुषसम्बन्धमेव करोति विषयस्य। नोपलक्षणसम्बन्धम्।

---

१. 'र्ग', २. 'क्रि' ख. ग. पाठः.

सम्बन्धे वा जीवनादेरपि विषयसम्बन्धः स्यात् । तत्र भावार्थं प्रति गुणत्वेन सम्बन्धे जीवनादेरङ्गत्वापत्तेर्दर्शपूर्णमासविकृतावपि जीवनादेरतिदेशप्रसङ्गः । प्राधान्ये[1] जीवनादेरपि साध्यताप्रसङ्गात्, सर्वाङ्गोपसंहारस्य नित्येऽपि कर्मणि प्रसङ्गः । किञ्च कामस्य नियोज्यविशेषणत्वे सति तस्मिन् नियोगसम्बन्धाद् जीवनादिवन्निमित्तत्वापत्तेः अकरणे प्रत्यवायोऽपि स्यात् । तस्मात् प्रत्ययेन फलसाधनतामात्रेऽवगते तद्विशेषाकाङ्क्षायां स्वर्गकामपदं समाससामर्थ्यात् पुरुषप्रधानमपि स्वर्गस्य कामविषयतया साध्यताप्रतीतेस्तत्परतया फलविशेषसमर्पकत्वेन सम्बध्यते । अर्थात् तत्कामिनस्तत्राधिकार इति रमणीयम् ॥ ५९ ॥

ननु तिङ्कृत्तद्धितसमासैरनभिहित इति विशेषणात् तिङा यागस्य करणतायामभिहितायां ज्योतिष्टोमेनेति तृतीया नोपपद्यत इत्यत आह—

तिङादिभिरनिर्दिष्टे तृतीया न विरुध्यते ।
पौनरुक्त्यान्नि[2]षेधोक्तेर्भिन्नार्थापाश्रयान्न तत् ॥ ६० ॥

न तावत् तिङ्कृत्तद्धितसमासैरनभिहित इति निषेधोऽदृष्टार्थः । किन्तु घटं क्रियत इत्युक्ते प्रत्ययाभ्यां घटगतकर्मकारकत्वस्याभिधाने पौनरुक्त्यात् तन्निवारणाय निषेधः । तत्र दीर्घेण दण्डेन शुक्लां गामानयेति द्विरभिधानेऽपि यथा

---

१. 'न्य', २. 'नि' ख. ग. पाठः.

भिन्नप्रकृत्यर्थसम्बन्धिकारकत्वांशभेदाद् न पौनरुक्त्यप्रसङ्गः, तथा यजतिज्योतिष्टोमशब्दाभिधेयसामान्यविशेषप्रकृत्यर्थसम्बन्धिकारकत्वांशभेदात् सुप्तिङ्भ्यामेकैककारकत्वाभिधाने न कश्चिद् दोषः । तिङा च करणताभिधानाभावे प्रतिषेधोऽप्यप्राप्त एव स्यात् । कारकान्तरविषयो वायं प्रतिषेधः ॥ ६० ॥

ननु कामनापदस्य फलसमर्पकत्वे कर्मण्यधिकारी[2] सिध्यति । फलसाधनस्य[3] वाक्यार्थत्वे काम्यनित्यविभागोऽपि[4] न स्यादित्यत आह—

**यस्येष्टसाधनं तस्याधिकारश्च प्रसिध्यति ।**
**विभागः काम्यनित्यादेर्विशेषणविभागतः ॥ ६१ ॥**

यस्याभिलषितमिदं कर्म साधयति तस्येदं कर्मेति कर्मणा पुरुषस्य स्वस्वामितान्वयो नियोगेनैव सामर्थ्यात् सिध्यति । उपकारकभावेऽवगते तदर्थमुपादानादपि स्वत्वमुपपद्यते । ननु यजेतेत्युक्ते यागो मम कर्तव्य इति प्रतीयते न यागो ममेष्टसाधनमिति । न । नियोगभावनावादिनोरपि यागकार्यताप्रतीतेर्नियोगभावनाप्रतीत्युत्तरकालीनत्वादिहापीष्टसाधनताप्रतीत्यनन्तरभावित्वं न विरुध्यते । अतः प्रथमं कर्मणि स्वाभिलषितसाधने स्वामित्वेनान्वयं प्रतिपद्य पश्चात्

---

१. 'ङ्गमे', २. 'री न सि', ३. 'नवा', ४. 'पि स्या' ख. ग. पाठः.

कर्तृत्वेनान्वेतीत्यविकारिणः कर्तृत्वमुपपद्यते। यत्र फलैपरमपि पदं पुरुषेण श्रूयमाणेनाध्याह्रियमाणेन वा सम्बन्धसंसर्गे नैराकाङ्क्ष्यं प्रतिपादयति, तत्र काम्यता। यत्र विशेषणान्तरविशिष्टेन नैराकाङ्क्ष्यं, तत्र नित्यता। फलं च नित्यतासामर्थ्यादेव नित्याभिलषितप्रत्यवायपरिहारः। फलभेदसिद्धौ च दर्शपूर्णमासलक्षणे कर्मण्यधिकारवाक्यद्वयोपयोगः। न च पुरुषविशेषणयोः कामनाजीवनयोः कस्यचित् फलपरता कस्यचिन्निमित्तपरतेति द्वैरूप्यं दोषः। नियोज्यविशेषणत्वायोगादवश्याभ्युपगन्तव्यत्वात्। न च जीवनमपि नियोज्यविशेषणं सम्भवति। यावज्जीवनस्य साध्यत्वाद् यौगपद्यायोगाज्जीवनमात्रस्यावक्तव्यत्वात्। निमित्तपक्षे तु पौनःपुन्याय यावच्छब्दः। तस्मादिष्टसाधनपक्षे न कश्चिद् दोष इति स्थितम्॥ ६१॥

तस्मात् कार्यान्विते शब्दसामर्थ्यनियमाभावादन्यान्विते सामर्थ्यमित्युपसंहरति —

अतोऽन्यान्वितसामर्थ्यं पदानां परिनिश्चितम्।
न्यायैरुक्तप्रकारेण यथाशक्ति प्रदर्शितैः॥ ६२॥

अत्राकाङ्क्षासन्निधियोग्यतासामर्थ्यात् पदानि संसर्गं प्रतिपादयन्तीति प्रसिद्धम्। केयमाकाङ्क्षा। पदार्थे प्रतिपन्ने प्रतिपत्तुरर्थान्तरविषया जिज्ञासा। किन्निबन्धना सा, कुतो वा निवर्तत इत्यत आह —

१. 'लमपि वदन् पु' ख. ग. पाठः. २. 'न वाध्या' क. पाठः. ३. 'वै', ४. 'त्व', ५. 'न जी' ख. ग. पाठः. ६. 'स्य यौ' क. पाठः. ७. 'त' ख. ग. पाठः. ८. 'विनि' क. पाठः.

**अभिधानानवसानाज्जिज्ञासार्थाच्च जायते ।**
**प्रयोजनावसानाच्च पदार्थे सा निवर्तते ॥ ६३ ॥**

अन्विताभिधायिनः शब्दादभिधेयैकदेशे सहकार्यभावादनवगतेऽभिधानमेवापर्यवसितमभिधेयैकदेशान्तरे जिज्ञासामुत्पादयति । क्वचिदर्थाच्च विश्वजिदादिषु जिज्ञासा जायते । उभयविधा च प्रयोजनसमर्थसंसर्गसिद्धौ निवर्तत इति ॥ ६३ ॥

का पुनर्योग्यता । जिज्ञासानिवर्तकत्वेनान्वयसामर्थ्यम् । कः पुनः सन्निधिः । अनन्वयिपदार्थान्तराव्यवधानेन बुद्धौ विपरिवृत्तिः । किमाकाङ्क्षादिसामर्थ्यात् पदानि युगपत् संसर्गबुद्धिमुत्पादयन्ति, किं वा क्रमेणापीत्यत आह—

**संसर्गबुद्धिं शब्दाश्च क्रमेणैव वितन्वते ।**
**साकाङ्क्षक्रमसंसर्गबुद्धिदृष्टेः प्रयुक्तिषु ॥ ६४ ॥**

गामित्युक्ते प्रकृतिप्रत्ययौ (अ)गोव्यावृत्तं[1] कर्मकारकं[2] बोधयन्तौ क्रियायां जिज्ञासामुत्पादयतः । आनयतिपदसन्निधानात् तु तत्सहकारिणौ पुनः क्रियया संसर्गं प्रतिपादयतः । क्रमवत्संसर्गपदार्थाकाङ्क्षयोर्दर्शनात् । सकृत्प्रयुक्तस्यापि पदस्य सहकारिसान्निधाने स्मर्यमाणस्य[3] पुनर्बुद्धिहेतुत्वोपपत्तेः । तस्मात् सिद्धं पदानामन्विताभिधानसामर्थ्यात् संसर्गप्रतिपादकत्वम् ॥ ६४ ॥

१. 'धा प्र' ख. ग. पाठः. २. 'कत्वं बो' क. पाठः. ३. 'यास्' ख. ग. पाठः.

नन्वेवमभिधानाभिधेयसम्बन्धस्य साङ्केतिकत्वाद् वाक्यस्य च लोकवत् पौरुषेयत्वाद् धर्माधर्मब्रह्मसु च प्रत्यान्तरायोगाद् न शब्दानां तेषु प्रामाण्यमित्यत आह —

**स्वार्थप्रवृत्तमापूर्वजन्यश्चेद् वेद इष्यते ।**
**ईश्वरज्ञानवन्न स्यात् कार्यत्वे सिद्धसाधनम् ॥ ६५ ॥**

यदि तावत् स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वं नाम पौरुषेयत्वं वेदस्य साध्यते, तत्र प्रत्यनुमानं — वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यो न भवति, अनीश्वरबुद्धितत्कार्यत्वाभावे सति धर्माधर्मब्रह्मप्रमाणत्वाद्, ईश्वरज्ञानवत् । ईश्वरवादिनां पौरुषेयत्वेन प्रामाण्यवादिनां च प्रत्यनुमानम् । अथ न प्रामाण्यं धर्मादिषु वेदस्येत्यसिद्धो हेतुः । नापीश्वर इत्याश्रयहीनो दृष्टान्त इति । तर्हि किं साध्यते । कार्यतामात्रं[1] चेत्, सिद्धसाधनम् । यदि वर्णाः प्रत्युच्चारणं निष्पाद्यन्ते, तदा त एव क्रमविशेषसमारूढतया वेदशब्दाभिधेया इति प्रत्युच्चारणं वेदो निष्पाद्यते । यदि वा नित्या[2] वर्णाः, तथाप्युपलब्ध्यादिक्रमविशेषसम्भिन्ना एव वेद इति प्रत्युच्चारणं[3] निष्पाद्यते । क्रमविशेषसादृश्यपरम्परयाऽनिदंप्रथमत्वाच्च वेदे नित्यताभिधानम् ॥ ६५ ॥

अथ वेदाध्ययनाभिधानाभिधेयसम्बन्धयोरिदंप्रथमता साध्यते । तत्राह —

१. 'र्यमा', २. 'त्युच्चा' ख. ग. पाठः. ३ 'द' क. पाठः.

**वेदाध्ययनशब्दार्थव्यवहारो यथाधुना ।**
**तथैव पूर्वकालेऽपीत्यनुमानं प्रवर्तताम् ॥ ६६ ॥**

विवादाध्यासितौ वेदाध्ययनशब्दार्थव्यवहारौ पूर्वपूर्वत[1]थाविधाध्ययनादिनिबन्धनौ, वेदाध्ययनादित्वाद् इदानींतनं[2] वेदाध्ययनादिवत् । न च वाक्याध्ययनत्वाद् भारतादिवदिदंप्रथमतानुमानं, सामान्यतोदृष्टस्य वेदाध्ययनत्वादिति विशेषतोदृष्टविरोधे दुर्बलत्वात् । नचागम[3]विरोधः । सृष्टिश्रुतेर्निष्पाद्यतामात्रविषयत्वात् । ननु सर्वज्ञश्रुतेरीश्वरो धर्माधर्माद्युपलभ्य वेदं करिष्यति । न । निरपेक्षप्रामाण्यमन्तरेण सर्वज्ञत्वासिद्धेः । किञ्च ईश्वरः स्वरूपज्ञानेन सर्वज्ञः । न तत्र लोकवद् वागादीनि वाक्यरचना[4]कारणानि सन्ति, युक्तावस्थायामिव योगिनाम् । अथ विग्रहोपादानेन वागादिभिर्वाक्यं कुर्यात् । न । तत्र चैतन्यस्यावच्छेदादसर्वज्ञत्वाद्, वियुक्तावस्थायामिव योगिनाम् । अथ स्वरूपज्ञानेन सर्वमुपलभ्य विग्रहोपादानेन सर्वमुपलब्धमनुस्मरन् वाक्यं कुर्यात् । न । स्वरूपज्ञानस्य संस्काराभावात् । न च धर्माधर्मब्रह्मसु प्रमाणान्तरमस्ति । अत्र स्वयूथ्यैरिदमुक्तं — मा भूद् धर्माधर्मयोर्मानान्तरयोग्यता । ब्रह्मणस्तु भूतत्वाद् मानान्तरयोग्यत्वात् तद्विषयवेदान्त[5]वाक्यानां पौरुषेयत्वमेव स्यात् । अतस्तत्परिहाराय तेषामपि कार्यनिष्ठता वर्णयितव्येति । तथा[6] "सत्सम्प्रयोगे—"* इति मानान्तरयोग्यत्वमपौरुषेयत्वसिद्ध्ये निरा-

---

१. 'प्रवृत्तत', २. 'नाध्य' क. पाठः. ३. 'मिकवि' ख. ग. पाठः. ४. 'क', ५. 'न्तानां' क. पाठः. ६. 'था च स' ख. ग. पाठः.

---

* जैमि० १. १. ४. ४.

कृतम् । योग्यत्वे तु पौरुषेयता स्यादिति । नैतत् सारम् । अयोग्यविषयस्यापि बुद्धादिवाक्यस्य पौरुषेयत्वदर्शनाद्, योग्यविषयस्यापि 'वायुर्वै क्षेपिष्ठे'त्यादेरपौरुषेयत्वदर्शनाच्च । विधिसंसर्गेऽप्यर्थवादेन न विधिः प्रतिपद्यते । किन्तु प्रशंसादिरेव प्रमाणान्तरयोग्योऽर्थः । तस्मादन्यदेव पौरुषेयत्वादेः कारणम् । अथ मा भूत् पौरुषेयत्वम् । अपौरुषेयत्वं तु कुतः । न । असाध्यत्वात् । प्रामाण्यं तर्हि वेदस्य कथं, तस्मिन् सत्यबाध्यमानप्रमितिजननात् । शाब्दप्रमितेस्तु बाधोऽपेक्ष्यमाणप्रमितिबाधात् । पौरुषेयत्वाभावात् तु प्रमित्यन्तरापेक्षा नास्तीत्युक्तम् । तस्मादबाधः ॥ ६६ ॥

अतः सिद्धं ब्रह्मणि शब्दस्य प्रामाण्यमित्याह —

**अतः सत्यादिशब्दास्तु संसृष्टार्थोक्तिशक्तितः ।**
**मानान्तरस्याविषयं भूतार्थं बोधयन्ति नः ॥ ६७ ॥**

के पुनः शब्दा ब्रह्मस्वरूपसमर्पकाः, के पुनः सोपाधिकरूपसमर्पका इति तत्राह —

**अनुपाधिप्रवृत्तोभिर्ज्ञानानन्दसदुक्तिभिः ।**
**स्वसामान्याभिधानेन व्यक्तिरेका समर्प्यते ॥ ६८ ॥**

ज्ञानानन्दसच्छब्दाः परापरसामान्यवाचकत्वात् सामानाधिकरण्याच्च स्वसामान्याभिधानमुखेनैकामानन्दव्यक्तिमपरसामान्यव्यञ्जितां ब्रह्मत्वेन लक्षयन्ति, सन्मूर्तं द्रव्यं

---

१. 'पा', २. 'ग्या', ३. 'त्वापौरुषेयत्वादेः' ख. ग. पाठः.
४. 'ता' क. पाठः. ५. 'त्याभिज्ञाना' ख. ग, पाठः.

कुड्यमिति च परापरसामान्यानामेकत्र वृत्तिदर्शनात् । तथाच 'यतो वा इमानि भूतानी'[1]ति लक्षणं निर्दिश्य 'आनन्दाद्ध्येव खल्विमानी'ति लक्ष्यं[2] ब्रह्मानन्दं निर्दिशति। तत्रानन्दस्य परप्रकाश्यं[3](क?)तानिवृत्तये ज्ञानशब्दः। स्वभावतः शून्यतानिवृत्तये सच्छब्दः । अथवा ब्रह्मव्यतिरिक्तस्यानन्दस्य ज्ञानस्य सतश्चाभावात् तत्सामान्ययोगाद् ब्रह्मैव सदादिशब्दैरभिधीयते। ननु तर्हि तेषां पर्यायत्वप्रसङ्गः । न । तुच्छजाड्यदुःखविरोध्युपाधिभेदेन प्रवृत्तेः । नन्वेवं सदादिशब्दानां निरुपाधिकवृत्तित्वं न स्यात् । नैष[4] दोषः । सामान्योपाधौ दुःखादिविरोध्युपाधौ वा नियतैकस्मिन् वस्तुनि बुद्धिमुत्पादयन्तीति निरुपाधिकाः। अस्थूलादिशब्दास्तु (अ)नियतवस्तुविषयाँ उपाधितन्त्रा इति। ननु तुच्छादिविरोधित्वमप्रतिपाद्यापि सदादिव्यवहारो दृश्यते । तर्हि मायानिर्मितानामपि ज्ञानानन्दसतां प्रतीतेः सामान्यपक्ष[5] एवाश्रीयताम् । ननु सामान्यानामपि मायात्मकत्वादानन्दादिरूपता ब्रह्मणो न स्यात् । आनन्दादिसामान्याश्रयत्वमात्रत्वादानन्दादिस्वरूपताया न परमार्थसामान्याश्रयत्वमपेक्ष्यते । ननु मिथ्यारजतसम्भिन्ना शुक्तिर्न रजतमिति व्यवह्रियते। सत्यं, रजताभासत्वात् तस्य । इह तु सामान्यान्तराभावात् तेषां न सामान्याभासत्वम् । तस्मादानन्दादिसामान्याश्रयत्वादानन्दादिरूपता ब्रह्मणः सिद्धा। तस्य चानन्दस्य मिथ्यात्वविरोधः सत्यशब्देनोच्यते । अद्वितीया-

१. 'नि जायन्ते इति' क. पाठः. २. 'क्ष्यं नि' ख. ग. पाठः. ३. 'शकता', ४. 'या इ' क. पाठः. ५. 'न्यमेवा' ख. ग. पाठः.

न(न्द?न्त)ब्रह्मादिशब्दैर्देशकालवस्तुपरिच्छेदाभावः, अस्थूलादिशब्दैर्निष्प्रपञ्चता, सर्वज्ञत्वादिशब्दैः प्रपञ्चोपाधिधर्मवत्ता कथ्यते। तत्र प्रपञ्चोपाधिकधर्माः सति प्रपञ्चे बाधशून्या इत्येतावत्। स्वरूपेण तु मायात्मकाः। अस्थूलादयश्च निवृत्त्यात्मान इति न परमार्थसदद्वितीयताविरोधः। आनन्दादिशब्दाश्च काल्पनिकसामान्यद्वारेणैकस्यामानन्दव्यक्तौ पर्यवस्यन्ति। धर्मधर्मिविभागप्रतिपादनाभावान्न परमार्थसदद्वितीयताविरोधः। अथवा आकाशशब्दवत् सच्छब्दोऽपि घटादिष्वनुवर्तमानस्यैकस्यैव स्वतन्त्रस्य सतो वाचकः। ज्ञानानन्दशब्दौ तु सामान्यद्वारेण तत्र वर्तिष्येते। एवंच[1] सति गुणगुणिसम्बन्धप्रयुक्ता लक्षितलक्षणापि न स्यात्। तस्मादेकमद्वितीयमानन्द[2]रूपं ब्रह्म सिद्धम् ॥ ६८ ॥

तथा जीवस्य ब्रह्मात्मता नाध्यासादिलक्षणेत्या[3]ह —

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च यतो जीवस्ततः परः ॥ ६९ ॥**

यस्मिन् वाक्ये षड्विधं तात्पर्यलिङ्गं यस्मिन्नर्थे गम्यते, तद् वाक्यं तत्परमित्यध्यवसीयते। तथाचोपक्रमोपसंहारयोरैकरूप्यम् 'अमतं मतमविज्ञातं विज्ञातम्', 'एकमेवाद्वितीयम्', 'ऐतदात्म्यमिदं सर्वं', 'तत् त्वमसी'ति। तथाभ्यासोऽपि 'एकमेवाद्वितीयं', 'तत् त्वमसी'ति पुनः पुनर्वचनात्। तथापूर्वतापि। नहि ब्रह्मात्मैकत्वं केनचिदपि प्रमाणान्तरेण गम्यते।

---

१. 'च गु' ख. ग. पाठः. २. 'न्दस्वरू' क. पाठः. ३. 'स्यत आ' ख. ग. पाठः.

तथा फलमपि 'आचार्यवान् पुरुषो वेद', 'तस्य तावदेव चिरमि'त्यादि । तथार्थवादोऽपि 'अनेन जीवेनात्मनानुप्रविश्ये'त्यादि । तथा 'तस्मादेनं स्वपितीत्याचक्षते । स्वं ह्यपीतो भवती'त्यादिना, शरीरेन्द्रियाणामन्नमयत्वेनानात्मताप्रतिपादनेन च, तप्तपरशुग्रहणदृष्टान्तेन चोक्तब्रह्मात्मतासत्याभिसन्धस्य मोक्षकथनेन चास्यैवार्थस्योपपादनं क्रियते । क्वचिच्चावस्थात्रयवैलक्षण्येनासङ्गत्वोपपादनेन । एवं यतो वेदान्तवाक्येषु जीवस्य ब्रह्मात्मतायां वाक्यतात्पर्य[1]लिङ्गानां षण्णां समुच्चयो विकल्पो वा यथायोगं गम्यते, अतः परमात्मैवायं जीवः, शब्दस्य च स्वभावतोऽर्थपरत्वात् प्रत्ययपरत्वायोगात् ॥ ६९ ॥

न च प्रमाणान्तरविरोधः, अविद्योपाधिनिमित्तत्वाद् भेद[2]व्यवहारस्येत्याह —

अविद्या भेदिकोपाधिर्नातिरेको न चापि धीः ।
[3]द्वैयापेक्षं तु तुल्यत्वात् सुषुप्तादावदर्शनात् ॥ ७० ॥

'न तं विदाथ य इमा जजानान्यद् युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ती'त्यस्मिन् मन्त्रेऽन्यद् युष्माकमन्तरं बभूवेत्युक्त्वा किं तदन्तरमिति वीक्षायां नीहारेण प्रावृता इति नीहारस्य तमसो व्यवधायकत्वं गम्यते । तमश्च न बाह्यं, किं त्वान्तरम् । तच्च 'नासदासीन्नो सदासीत् तम आसीदि'त्यादिश्रुतेः सदसद्विलक्षणं,

"अहमज्ञानजं तमः ।

---

१. 'र्यस्य लि' ख. ग. पाठः. २. 'दादिव्य', ३. 'वत्सापेक्षत्वतुल्य'

नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥"

इति स्मृतेर्ज्ञाननिवर्त्यं च । तस्मादज्ञानमेव तत् ।

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

इति स्मृतिरज्ञानमेव व्यवधायकं दर्शयति । नन्वज्ञानं कस्य कस्मिन्निति वीक्षायां जीवस्य ब्रह्मणीति वक्तव्यम् । ततश्चाज्ञानमन्तरेण जीवब्रह्मविभागायातिरेकः कल्पयितव्यः । तन्न । अतिरेकेऽपि द्वयापेक्षायाः कस्य कस्मादिति तुल्यत्वादतिरेकोपलक्षितस्य[1] जीवत्वे तस्य च ज्ञानान्निवर्त्यत्वेऽज्ञानपक्षान्न विशिष्यते । विशिष्टस्य जीवत्वेऽनिर्मोक्षः । अतो यत्किञ्चिदेतत् । नापि धीमात्रमेव जीवोपाधिः । तदप्रतीतावपि सुषुप्ते जीवप्रतीतेः । तस्मादविद्यैव भेदिका । सा चापरोक्षज्ञानादेव कार्त्स्न्येन निवर्तते ॥ ७० ॥

तच्चापरोक्षज्ञानं शब्दादेवेत्यत आह—

**विषयोत्पन्नतः संविदैक्याद्वाज्ञानहानतः ।**
**स्वतः सिद्धेरतः शब्दादापरोक्ष्यं प्रजायते ॥ ७१ ॥**

लोकेऽपि संवेदनस्य विषयोत्पन्नत्वाद् वा विषयस्य संविदैक्याद् वा विषयस्य चेतनप्रकृतिकतया स्वयमेव चेतनेनाभिन्नस्यावरणध्वंसाद् वा आपरोक्ष्यात् तन्निमित्तं ज्ञानमपरोक्षज्ञानमित्युच्यते । न ज्ञानस्य स्वतोऽपरोक्षतामात्रेम् ।

---

१. 'व्य' क. पाठः. २. 'श्चात् । ना' ख. ग. पाठः.

नापि तज्जन्यसंवेदनस्य । एवं ब्रह्मण्यपि शब्दज्ञाननिमित्तं संवेदनं ब्रह्मप्रकृति, ब्रह्माभिन्नसर्वचैतन्यानां ब्रह्मप्रकृतिकत्वाद् वा स्वयंप्रकाशस्यावरणध्वंसाद् वा अपरोक्ष आत्मनि प्रत्ययत्वाद् वा, अहंप्रत्ययवत् । तन्निमित्तं ज्ञानमपरोक्षज्ञानमित्युच्यते । सञ्जातेऽपि शब्दात् तथाविधे ज्ञाने असंभावनादिदोषादविद्यासंस्कारबलाद् वा परोक्षमिव भ्रमादवभासते । तच्च मननिदिध्यासनादिभिर्विमलीकरणात् सूक्ष्मवस्त्वालोचनक्षमेण मनसा शरीरेन्द्रियव्यतिरिक्ते च त्वम्पदार्थे प्रत्यक्षतोऽवभासमाने ब्रह्मात्मज्ञानाकारेण परिणममानेन मनसा स्थिरीभावात् क्षणद्वयवर्तिनाग्निनेव क्षणमात्रेणादाहकेनापि क्षणद्वयवर्तिना दह्यते । ततश्च तत् सिद्धम् ॥ ७१ ॥

आतो निश्श्रेयसप्राप्तेस्तादर्थ्याच्छाब्दनिर्णयः ।
विशिष्टफलसम्बन्धी श्रोतव्योऽयं बुभुत्सुना ॥ ७२ ॥

विदितसकलवेद्यैर्न प्रशंसन्ति लोके
ग्रथितमपि महद्भिः किं पुनर्मादृशेन ।
इति विफलसमेऽस्मिन् वाग्व्ययेऽहं (प्रवृ)त्तः
स्वमतिविमल(तोयैः ? तायै) क्षन्तुमर्हन्ति सन्तः ॥

वन्दे तमात्मसम्बुद्धस्फुरद्ब्रह्मात्मभावतः ।
अर्थतोऽपि न नाम्नैव योऽनन्यानुभवो गुरुः ॥

प्रकाशात्मयतीन्द्रेण प्रणिपत्य जनार्दनम् ।
प्रतिबोधाय बालानां प्रणीतः शाब्दनिर्णयः ॥

---

समाप्तोऽयं ग्रन्थः ।

शुभं भूयात् ।

## READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nilakantha Dîkshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakanthâ. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Saukarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. Second (Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः ( Mîmâmsâ ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1 & 2 Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | RS. | AS. | P |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvânanda (Part I. 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tîkasarvaswa of Vandyaghatiya-Sarvananda (Part II. 2nd Kanda 1-6 Vargas) | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvati. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः ( Alankara ) by Singa Bhûpala. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tikâsarvaswa of Vandyaghatîya Sarvananda (Part III 2nd Kanda 7-10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda Part (IV 3rd Kanda) | 1 | 8 | 0 |
| No. 53- शाब्दनिर्णयः (Vedanta) by Prakasatmayatindra. | 0 | 12 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum.*